वहति जलमियं पिनष्टि गन्धानियमियमुद्ग्रथते स्रजो विचित्राः।
मुसलमिदमियं च पातकाले मुहुरनुयाति कलेन हुंकृतेन ॥ ४ ॥

भवतु । कुटुम्बिनीमाहूय पृच्छामि । नेपथ्याभिमुखमवलोक्य ।

गुणवत्युपायनिलये स्थितिहेतो[1] साधिके त्रिवर्गस्य ।
मद्भवननीतिविद्ये [2]कार्यादार्ये द्रुतमुपेहि ॥ ५ ॥

**नटी** । प्रविश्य । अज्ज इअह्मि । अण्णाणिओएण मं अणुगेह्णदु अज्जो ॥ आर्य इयमस्मि । आज्ञानियोगेन मामनुगृह्णात्वार्यः ।

**सूत्रधारः** । आर्ये तिष्ठतु तावदाज्ञानियोगः । कथय किमद्य भगवतां ब्राह्मणानामुपनिमन्त्रणेन कुटुम्बकमनुगृहीतमभिमता वा भवनमतिथयः प्राप्ता यत एष पाकविशेषारम्भः ।

**नटी** । अज्ज उवणिमन्तिदा मए भअवन्तो बह्मणा ॥ आर्य उपनिमन्त्रिता मया भगवन्तो ब्राह्मणाः ।

**सूत्रधारः** । अथ कस्मिन् निमित्ते ।

**नटी** । उवरज्जदि किल च[3]न्दो त्ति ॥ उपरज्यते किल चन्द्र इति ।

**सूत्रधारः** । क एवमाह ।

**नटी** । एवं खु णअरवासी जणो मन्तेदि ॥ एवं खलु नगरवासी जनो मन्त्रयते ।

**सूत्रधारः** । आर्ये कृतश्रमोऽस्मि च[4]तुःषष्ट्यङ्गे ज्योतिःशास्त्रे । तत् प्रवर्त्यतां भगवतो ब्राह्मणानुद्दिश्य पाकविशेषः । चन्द्रोपरागं प्रति तु त्वं *केनापि विप्रलब्धासि । पश्य ।

क्रूरग्रहः [5]सकेतुश्चन्द्रं संपूर्णमण्डलमिदानीम् ।
अभिभवितुमिच्छति बलाद्

नेपथ्ये । आः क एष मयि स्थिते चन्द्रमभिभवितुमिच्छति ।

**सूत्रधारः** । रक्षत्येनं तु बुधयोगः ॥ ६ ॥

**नटी** । अज्ज को उण एसो धरणीगोअरो भविअ चन्दं गहाहिहवादो रक्खिदुं इच्छदि ॥ आर्य कः पुनरेष धरणीगोचरो भूत्वा चन्द्रं ग्रहाभिभवाद्रक्षितुमिच्छति ।

---

[1] °हेतोः T. —[2] कार्याचार्ये T.H. —[3] भअवं चन्दो M.T.H.—[4] चतुःषष्ट्यङ्गे omitted H (MN). —[5] चन्द्रमसंपूर्ण° M. चन्द्रमसं पूर्ण° T.
*Omit केनापि.

**सूत्रधारः**। यत्सत्यं मया नोपलक्षितः। भवतु। भूयोऽभियुक्तः स्वरव्यक्तिमुपलप्स्ये। क्रूरग्रह इत्यादि पुनः पठति।

६ पुनर्नेपथ्ये। आः क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति।

**सूत्रधारः**। आम् ज्ञातम्।

**कौटिल्यः**

९ नटी भयं नाटयति।

**सूत्रधारः** **कुटिलमतिः स एष येन**
**क्रोधाग्नौ प्रसभमदाहि नन्दवंशः।**
**चन्द्रस्य ग्रहणमिति श्रुतेः सनाम्नो**
**मौर्येन्दोर्द्विषदभियोग [1]इत्युपैति ॥ ७ ॥**

तदावां गच्छावः

निष्क्रान्तौ।

प्रस्तावना

ततः प्रविशति शिखां परामृशन् सकोपश्चाणक्यः।

**चाणक्यः**। आः क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति

**नन्दकुलकालभुजगीं कोपानलबहुललोलधूमलताम्।**
**अद्यापि बध्यमानां वध्यः को नेच्छति शिखां मे ॥ ८ ॥**

अपि च

**उल्लङ्घयन् मम समुज्ज्वलतः प्रतापं**
**कोपस्य नन्दकुलकाननधूमकेतोः।**
**सद्यः परात्मपरिमाणविवेकमूढः**
**कः शालभेन विधिना लभतां विनाशम् ॥ ९ ॥**

**शार्ङ्गरव शार्ङ्गरव।**

**शिष्यः**। प्रविश्य। उपाध्याय आज्ञापय।

३ **चाणक्यः**। वत्स उपवेष्टुमिच्छामि।

**शिष्यः**। उपाध्याय नन्वियं संनिहितवेत्रासना द्वारप्रकोष्ठशाला। तदिहोपवेष्टुमर्हत्युपाध्यायः।

---

१ अवैति T.H.

चाणक्यः । वत्स कार्याभियोग एवास्मानाकुलयति न पुनरुपाध्यायसहभूः शिष्यजने दुःशीलता । [शिष्यो निष्क्रान्त उपविश्यात्मगतम्] । कथं प्रकाशतां गतोऽयमर्थः पौरेषु यथा किल नन्दकुलविनाशजनितरोषो राक्षसः पितृवधामर्षितेन सकलनन्दराज्यपरिपणनप्रोत्साहितेन पर्वतकपुत्रेण मलयकेतुना सह संधाय तदुपबृंहितेन[1] महता म्लेच्छराजबलेन वृषलमभियोक्तुमुद्यत इति । [विचिन्त्य] । अथवा येन मया सर्वलोकप्रकाशं नन्दवंशवधं प्रतिज्ञाय निस्तीर्णा दुस्तरा प्रतिज्ञासरित् सोऽहमिदानीं प्रकाशीभवन्तमप्येनं समर्थः शमयितुम्— कुतः—यस्य मम

श्यामीकृत्याननेन्दून्नरिपुयुवतिदिशां संततैः शोकधूमैः ॥
कामं मन्त्रिद्रुमेभ्यो नयपवनहृतं मोहभस्म प्रकीर्य ।
दग्ध्वा संभ्रान्तपौरद्विजगणरहितान् नन्दवंशप्ररोहान्
दाह्याभावान्न खेदाज्ज्वलन इव वने शाम्यति क्रोधवह्निः ॥१०॥

अपि च

शोचन्तोऽवनतैर्नराधिपभयाद् धिक्शब्दगर्भैर्मुखैर्मामभ्रासनतोऽवकृष्टमवशं ये दृष्टवन्तः पुरा ।
ते पश्यन्ति तथैव संप्रति जना नन्दं मया सान्वयं
सिंहेनेव गजेन्द्रमद्रिशिखरात् सिंहासनात् पातितम् ॥ ११ ॥

सोऽहमिदानीमवसितप्रतिज्ञाभरोऽपि वृषलापेक्षया शस्त्रं धारयामि । मया हि

समुत्खाता नन्दा नव हृदयशल्या[2] इव भुवः
कृता मौर्ये लक्ष्मीः सरसि नलिनीव स्थिरपदा ।
द्वयोः सारं तुल्यं द्वितयमभियुक्तेन मनसा
फलं कोपप्रीत्योर्द्विषति च विभक्तं सुहृदि च ॥ १२ ॥

अथवा अगृहीते राक्षसे किमुत्खातं नन्दवंशस्य किं वा स्थैर्यमापादितं चन्द्रगुप्तलक्ष्म्याः । [विचिन्त्य] । अहो राक्षसस्य नन्दवंशे निर[3]तिशयो भक्तिगुणः । स खलु कस्मिंश्चिदपि जीवति नन्दान्वाये वृषलस्य साचिव्यं ग्राहयितुं न शक्यते नन्दवंशोद्यमं प्रति निरुद्योगो

---

१ तदुपगृहीतेन M.T.H., तदुपबृंहितेन (M.)—२ 'रोगाः T. H., रागाः M.—३ न शक्यते । (अतः) तदभियोगं प्रति निरुद्योगैरस्माभिरवस्थातुमयुक्तमित्यनयैव M.H., न शक्यते । तदभियोगं प्रति निरुद्योगः शक्योऽवस्थापयितुमस्माभिः । अनया T.

वस्थापयितुम्। अस्माभिरनया बुद्ध्या तपोवनगतोऽपि घातितस्तपस्वी नन्दवंशीयः सर्वार्थसिद्धिः। यावदसौ मलयकेतुमङ्गीकृत्यास्मदुच्छेदाय विपुलतरं प्रयत्नमुपदर्शयत्येव। प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा। साधु अमात्यराक्षस साधु।

**ऐश्वर्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते**
**तं गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाशया।**
**भर्तुर्ये प्रलयेऽपि पूर्वसुकृतासङ्गेन निःसङ्गया**
**भक्त्या कार्यधुरां वहन्ति कृतिनस्ते दुर्लभास्त्वादृशाः॥ १३॥**

अत एवास्माकं त्वत्संग्रहणे यत्नः। कथमसौ वृषलस्य साचिव्यग्रहणेन सानुग्रहः स्यादिति। कुतः।

**अप्रज्ञेन च कातरेण च गुणः स्याद्भक्तियुक्तेन कः**
**प्रज्ञाविक्रमशालिनोऽपि हि भवेत् किं भक्तिहीनात्फलम्।**
**प्रज्ञाविक्रमभक्तयः समुदिता येषां गुणा भूतये**
**ते भृत्या नृपतेः कलत्रमितरे संपत्सु चापत्सु च॥ १४॥**

तन्मयास्मिन् वस्तुनि न शयानेन स्थीयते। यथाशक्ति क्रियते तत्संग्रहणे प्रयत्नः। कथमिव। अत्र तावद् वृषलपर्वतकयोरन्यतरविनाशेन चाणक्यस्यापकृतं भवतीति विषकन्यकया राक्षसेनास्माकमत्यन्तोपकारि मित्रं घातितस्तपस्वी पर्वतेश्वर इति संचारितो जनापवादः। लोकप्रत्ययार्थमस्यैवार्थस्या[1]भिव्यक्तये पिता ते चाणक्येन घातित इति रहसि त्रासयित्वा भागुरायणेनापवाहितः पर्वतकपुत्रो मलयकेतुः। शक्यः खल्वेष राक्षसमतिपरिगृहीतोऽप्युत्तिष्ठमानः प्रज्ञया निवारयितुं न पुनरस्य निग्रहात् पर्वतकवधोत्पन्नमयशः प्रकाशीभवत् प्रमार्ष्टुमिति। प्रयुक्ताश्च स्वपक्षपरपक्षयोरनुरक्तापरक्तजनजिज्ञासया बहुविधदेशवेषभाषाचारवेदिनो नानाव्यञ्जनाः प्रणिधयः। अन्विष्यते च कुसुमपुरवासिनां नन्दामात्यसुहृदां निपुणं प्रचारगतम्। तत्तत् कारणमुत्पाद्य *कृतकृत्यतामापादिताश्चन्द्रगुप्तसहोत्थायिनो भद्रभटप्रभृतयः प्रधानपुरुषाः। शत्रुप्रयुक्तानां तीक्ष्णरसदादीनां प्रतिविधानं प्रत्यप्रमादिनः परीक्षितभक्तयश्च क्षितिपतिप्रत्यासन्नाः कृतास्तत्राप्तपुरुषाः। अस्ति चास्माकं सहाध्यायि मित्रमिन्दुशर्मा नाम ब्राह्मण औशनस्यां

---

1 अनभिव्यक्तये (M).

* Read कृतककृत्यताम्.

दण्डनीत्यां चतुःषष्ट्यङ्गे ज्योतिःशास्त्रे च परं प्रावीण्यमुपगतः । स च मया क्षपणकलिङ्गधारी नन्दवंशवधप्रतिज्ञानन्तरमेव कुसुमपुरमभिनीय सर्वनन्दामात्यैः सह सख्यं ग्राहितः । विशेषतश्च तस्मिन् राक्षसः समुत्पन्नविश्रम्भः । तेनेदानीं महत् प्रयोजनमनुष्ठेयं भविष्यति । तदेवमस्मत्तो न किंचित् परिहीयते । वृषल एव केवलं प्रधानप्रकृतिरस्मास्वारोपिततन्त्रभारः सततमुदास्ते । अथ वा यत्स्वयमभियोगदुःखैरसाधारणैरपाकृतं तदेव राज्यं सुखयति । कुतः ।

**स्वयमाहृत्य भुञ्जाना बलिनोऽपि स्वभावतः ।**
**गजेन्द्राश्च नरेन्द्राश्च प्रायः सीदन्ति दुःखिताः ॥ १५ ॥**

ततः प्रविशति यमपटेन चरः ।

**पणमह जमस्स चलणे किं कज्जं देवएहिं अण्णेहिं ।**
**एसो खु अण्णभत्ताणं हरदि जीअं *धडफडन्तं ॥ १६ ॥**

प्रणमत यमस्य चरणौ किं कार्यं देवकैरन्यैः ।
एष खल्वन्यभक्तानां हरति जीवं परिस्फुरन्तम् ॥

**अवि अ** ॥ अपि च

**पुरिसस्स जीविदव्वं विसमादो होदि भत्तिगहिआदो ।**
**मारेदि सव्वलोअं जो तेण जमेण जीआमो ॥ १७ ॥**

पुरुषस्य जीवितव्यं विषमाद् भवति भक्तिगृहीतात् ।
मारयति सर्वलोकं यस्तेन यमेन जीवामः ॥

जाव एदं गेहं पविसिअ जमपडं दंसअन्तो गीआइं गाआमि । इति परिक्रामति ॥ यावदेतद् गेहं प्रविश्य यमपटं दर्शयन् गीतानि गायामि ।

**शिष्यः** । विलोक्य । भद्र न प्रवेष्टव्यम् ।

**चरः** । हंहो बह्मण कस्स एदं गेहं ॥ हंहो ब्राह्मण कस्यैतद् गेहम् ।

**शिष्यः** । अस्माकमुपाध्यायस्य सुगृहीतनाम्न आर्यचाणक्यस्य ।

**चरः** । विहस्य । हंहो बह्मण अत्तणो केरअस्स य्येव मह धम्मभादुणो घरं होदि । ता देहि मे पवेसं । जाव तुह उवज्झाअस्स धम्मं उवदिसामि ॥ **हंहो ब्राह्मण आत्मीयस्यैव मम धर्मभ्रातुर्गृहं भवति । तस्माद्देहि मे प्रवेशम् ।** यावत्ते उपाध्यायाय धर्ममुपदिशामि ।

---

१ °प्रकृतिषु T.H.

* Read तडफडन्तं.

**शिष्यः** । सक्रोधं । किं भवानस्माकमुपाध्यायाद् धर्मवित्तरः ।

**चरः** । हंहो बह्मण मा एव्वं भणाहि । ण सव्वो सव्वं जाणादि । तां किंवि दे उवज्झाओ जाणादि किंवि अह्मारिसा ज़ाणन्दि ॥ हंहो ब्राह्मण मा एव भण । न हि सर्वः सर्वं जानाति । तत् किमपि त उपाध्यायो जानाति किमप्यस्मादृशा जानन्ति ।

**शिष्यः** । सर्वज्ञतामुपाध्यायस्य चोरयितुमिच्छसि ।

**चरः** । हंहो बह्मण जइ तुह उवज्झाओ सव्व जाणादि ता जाणादु दाव *कस्स चन्दो अणभिप्पेदो त्ति ॥ हंहो ब्राह्मण यदि तवोपाध्यायः सर्वं जानाति तदा जानातु तावत् कस्य चन्द्रोऽनभिप्रेत इति ।

**शिष्यः** । किमनेन ज्ञातेन भवति ।

**चरः** । हंहो बह्मण तुह उवज्झाओ जाणिस्सदि जं इमिणा जाणिदेण होदि । तुमं दाव एत्तिअं जाणासि कमलाणं चन्दो अणभिप्पेदो त्ति । णं पेक्ख ॥ हंहो ब्राह्मण तवोपाध्यायो ज्ञास्याति यदनेन ज्ञातेन भवति । त्वं तावदेतावज्जानासि कमलानां चन्द्रोऽनभिप्रेत इति । ननु प्रेक्षस्व ।

**कमलाण मणहराणं रूवाहिन्तो विसंवददि सीलं ।**
**संपुण्णमण्डलम्मि वि चन्दे जाइं विरुद्धाइं ॥ १८ ॥**

कमलानां मनोहराणा रूपाद्विसंवदति शीलम् ।
संपूर्णमण्डलेऽपि चन्द्रे यानि विरुद्धानि ॥

**चाणक्यः** । आकर्ण्यात्मगतम् । अये चन्द्रगुप्तादपरक्तान् पुरुषाञ् जानामीत्युपक्षिप्तमनेन ।

**शिष्यः** । किमिदम् । असंबद्धमभिधीयते ।

**चरः** । सुसंबद्धं य्येव एदं भवे जादि सुणिदुं जाणन्तं लहे ॥ सुसंबद्धमेवैतद् भवेद्यदि श्रोतुं जानन्तं लभे ।

**चाणक्यः** । भद्र प्रविश । लप्स्यसे श्रोतारम् ।

**चरः** । एसो पविसामि । प्रविश्योपसृत्य च । जेदु अज्जो ॥ एष प्रविशामि । ... । जयत्वार्यः ।

**चाणक्यः** । विलोक्यात्मगतम् । कथमयं प्रकृतिचित्तपरिज्ञाने नियुक्तो निपुणकः । प्रकाशम् । भद्र स्वागतम् । उपविश ।

---

१ सुणन्तं जाणन्तं अ. M.—२ श्रोतारं ज्ञातारं च M.I.H.

* Read कास.

**चरः** । जं अज्जो आणवेदि ॥ भूमावुपविशति ॥ यदार्य आज्ञापयति ।

**चाणक्यः** । वर्णयेदानीं स्वनियोगवृत्तान्तम् । अपि वृषलमनुरक्ताः प्रकृतयः ।

**चरः** । अह इं । अज्जेण खु तेसु तेसु विराअकारणेसु परिहरिदेसु सुगहीदणामहेए देवे चन्दउत्ते दिढं अणुरत्ताओ पकिदिओ । किंदु उण अत्थि एत्थ णअरे अमच्चरक्खसेण सह पढमं समुप्पण्णसिणेहबहुमाणा तिण्णि पुरिसा देवस्स चन्दसिरिणो सिरिं ण सहन्दि ॥ अथ किम् । आर्येण खलु तेषु तेषु विरागकारणेषु परिहृतेषु सुगृहीतनामधेये देवे चन्द्रगुप्ते दृढमनुरक्ताः प्रकृतयः । किंतु पुनरस्त्यत्र नगरेऽमात्यराक्षसेन सह प्रथमं समुत्पन्नस्नेहबहुमानास्त्रयः पुरुषाः देवस्य श्रीचन्द्रस्य श्रियं न सहन्ते ।

**चाणक्यः** । सक्रोधमात्मगतम् । ननु वक्तव्यं स्वजीवितं न सहन्त इति । प्रकाशम् । अपि ज्ञायन्ते नामधेयतः ।

**चरः** । कहं अमुणिदणामहेआ अज्जस्स णिवेदीअन्ति ॥ कथमज्ञातनामधेया आर्याय निवेद्यन्ते ।

**चाणक्यः** । तेन हि श्रोतुमिच्छामि ।

**चरः** । सुणादु अज्जो । पढमो दाव रिउपक्खे बद्धपक्खवादो खवणओ— ॥ शृणोत्वार्यः । प्रथमं तावद्रिपुपक्षे बद्धपक्षपातः क्षपणकः—

**चाणक्यः** । आत्मगतम् । अस्मद्रिपुपक्षे बद्धपक्षपातः क्षपणकः ।

**चरः** । जीवसिद्धी णाम जेण सा अमच्चरक्खसपउत्ता विसकण्णा देवे पव्वदीसरे समावेसिदा ॥ जीवसिद्धिर्नाम येन सा अमात्यराक्षसप्रयुक्ता विषकन्या देवे पर्वतेश्वरे समावेशिता ।

**चाणक्यः** । स्वगतम् । जीवसिद्धिः । एष तावदस्मत्प्रणिधिः । प्रकाशम् । अथापरः कः ।

**चरः** । अवरो खु अमच्चरक्खसस्स पिअवअस्सो काअत्थो सअडदासो णाम ॥ अपरः खल्वमात्यराक्षसस्य प्रियवयस्यः कायस्थः शकटदासो नाम ।

**चाणक्यः** । आत्मगतम् । कायस्थ इति लघ्वी मात्रा । तथापि न युक्तं प्राकृतमपि रिपुमवज्ञातुमिति । तस्मिन् मया सुहृच्छद्मा सिद्धार्थको विनिक्षिप्तः । प्रकाशम् । भद्र तृतीयं श्रोतुमिच्छामि ।

**चरः** । तिदीओ अमच्चरक्खसस्स दुदीअं हिअअं [1]पुप्फचत्तरणिवासो मणिआरसेट्ठी चन्दणदासो णाम *जस्स गेहे कलत्तं णासीकदुअ अमच्चरक्खसो णअरादो अवक्कन्तो ॥ तृतीयोऽमात्यराक्षसस्य द्वितीयं हृदयं पुष्पचत्वरनिवासी मणिकारश्रेष्ठी चन्दनदासो नाम यस्य गेहे कलत्रं न्यासीकृत्यामात्यराक्षसो नगरादपक्रान्तः।

**चाणक्यः** । आत्मगतम् । नूनं सुहृत्तमोऽसौ । न ह्यनात्मसदृशे राक्षसः कलत्रं न्यासीकरोति । प्रकाशम् । भद्र राक्षसेन चन्दनदासे कलत्रं न्यासीकृतमिति कथमवगम्यते ।

**चरः** । इअं अङ्गुलिमुद्दा अज्जं अवगमइस्सदि । इति मुद्रामर्पयति ॥ इयमङ्गुलिमुद्रा आर्यमवगमयिष्यति ।

**चाणक्यः** । मुद्रामवलोक्य सहर्षमात्मगतम् । ननु वक्तव्यं राक्षस एवास्मदङ्गुलिप्रणयी संवृत्त इति । प्रकाशम् । भद्र अङ्गुलिमुद्रागमं विस्तरेण श्रोतुमिच्छामि ।

**चरः** । सुणादु अज्जो । अज्ज दाव अहं अज्जेण पउरजणचरिदअण्णेसणे णिउत्तो परघरप्पवेसे परस्स असङ्कणिज्जेण इमिणा जमपडेण हिण्डन्तो मणिआरसेट्ठिणो चन्दणदासस्स गेहं पविट्ठोह्मि । तहिं जमपडं पसारिअ पउत्तोह्मि गीदाइं गाइदुं ॥ शृणोत्वार्यः । अद्य तावदहमार्येण पौरजनचरितान्वेषणे नियुक्तः परगृहप्रवेशे परस्याशङ्कनीयेनानेन यमपटेन हिण्डमानो मणिकारश्रेष्ठिनश्चन्दनदासस्य गेहं प्रविष्टोऽस्मि । तत्र यमपटं प्रसार्य प्रवृत्तोऽस्मि गीतानि गातुम् ।

**चाणक्यः** । ततः किम् ।

**चरः** । तदो एक्कादो अववरकादो पञ्चवरिसदेसीओ अदिदंसणीअसरीराकिदी कुमारओ बालत्तणसुलहकोदूहलोप्फुल्लणअणो णिक्कमिदुं पउत्तो । तदो हा णिग्गदो त्ति सङ्कापरिग्गहणिवेद[2]इत्तिओ तस्स य्येव अववरकस्स अब्भन्तरे इत्थिआजणस्स उट्ठिदो कलअलो । तदो ईसिदारदेसदाविदमुहीए एक्काए इत्थिआए सो कुमारओ णिक्कमन्तो य्येव णिब्भच्छिअ अवलम्बिदो हत्थे कोमलाए बाहुलदाए । ताए कुमारसंरोधसंभमप्पचलिदङ्गुलिआदो

1 पुप्फउर M.T.H, पुप्फच्चत्तर H.(M.N.).—2 णिहुदगदओ H, णिब्भरगदओ M.

* Read जस्सिं in place of जस्स गेहे.

करादो पुरिसङ्गुलिपरिणाहप्पमाणघडिआ इअं अङ्गुलिमुद्दिआ देहलीबन्धम्मि पडिआ ताए अणवबुद्धा मह चलणपासं समागच्छिअ *पणामणिहुदा कुलवहु विअ णिच्चला संवुत्ता । मए वि अमच्चरक्खसस्स णामङ्किदेत्ति अज्जस्स पादमूलं पाविदा । ता एसो इमाए आअमो ॥

तत एकस्मादपवरकात् पञ्चवर्षदेशीयोऽतिदर्शनीयशरीराकृतिः कुमारको बालत्वसुलभकुतूहलोत्फुल्लनयनो निष्क्रमितुं प्रवृत्तः । ततो हा निर्गतो हा निर्गत इति शङ्कापरिग्रहनिवेदयिता तस्यैवापवरकस्याभ्यन्तरे स्त्रीजनस्योत्थितः कलकलः । तत ईषद्द्वारदेशदापितमुख्यैकया स्त्रिया स कुमारको निष्क्रामन्नेव निर्भर्त्स्यावलम्बितो हस्ते कोमलया बाहुलतया । तस्याः कुमारसरोधसंभ्रमप्रचलिताङ्गुलेः करात् पुरुषाङ्गुलिपरिणाहप्रमाणघटितेयमङ्गुलिमुद्रिका देहलीबन्धे पतिता तयानवबुद्धा मम चरणपार्श्वे समागत्य प्रणामनिभृता कुलवधूरिव निश्चला संवृत्ता । मयाप्यमात्यराक्षसस्य नामाङ्कितेत्यार्यस्य पादमूलं प्रापिता । तदेषोऽस्या आगमः ।

**चाणक्यः** । भद्र श्रुतम् । अपसर । नचिरादस्यानुरूपं फलमधिगमिष्यसि ।

**चरः** । जं अज्जो आणवेदि । इति निष्क्रान्तः ॥ यदार्य आज्ञापयति ।

**चाणक्यः** । शार्ङ्गरव ।

**शिष्यः** । प्रविश्य । उपाध्याय आज्ञापय ।

**चाणक्यः** । वत्स मसीभाजनं पत्रं चोपानय ।

**शिष्यः** । यदाज्ञापयत्युपाध्यायः । निष्क्रम्य । पुनः प्रविश्य । उपाध्याय इदं मसीभाजनं पत्रं च ।

**चाणक्यः** । गृहीत्वा स्वगतम् । किमत्र लिखामि । अनेन खलु लेखेन राक्षसो जेतव्यः ।

**प्रतीहारी** । प्रविश्य । जेदु अज्जो ॥ जयत्वार्यः ।

**चाणक्यः** । सहर्षमात्मगतम् । गृहीतो जयशब्दः । प्रकाशम् । शोणोत्तरे किमागमनप्रयोजनम् ।

**प्रतीहारी** । अज्ज देवो चन्दसिरी सीसे कमलमउलाआरं अञ्जलिं णिवेसिअ अज्जं विण्णवेदि । इच्छामि अज्जेण अब्भणुण्णादो देवस्स पव्वदीसरस्स पारलोइअं कादुं तेण धारिदपुव्वाइं भूसणाइं भअवन्ताणं

* Omit पणामणिहुदा कुलबहु विय.

ब्रह्मणाणं पडिवादेमि त्ति ॥ आर्य देवः श्रीचन्द्रः शीर्षे कमलमुकुलाकारमञ्जलिं निवेश्यार्यं विज्ञापयति । इच्छाम्यार्येणाभ्यनुज्ञातो देवस्य पर्वतेश्वरस्य पारलौकिकं कर्तुं तेन धारितपूर्वाणि भूषणानि भगवद्भ्यो ब्राह्मणेभ्यः प्रतिपादयामीति ।

**चाणक्यः** । सहर्षमात्मगतम् । साधु वृषल मम हृदयेन सह संमन्त्र्य संदिष्टवानसि । प्रकाशम् । शोणोत्तरे उच्यतामस्मद्वचनाद्वृषलः । साधु वत्स अभिज्ञः खल्वसि लोकव्यवहाराणाम् । तदनुष्ठीयतामात्मनोऽभिप्रायः । किंतु पर्वतेश्वरेण धृतपूर्वाणि गुणवन्ति भूषणानि गुणवद्भ्य एव प्रतिपादनीयानि । तदहं स्वयं परीक्षितगुणान् ब्राह्मणान् प्रेषयामीति ।

**प्रतीहारी** । जं अज्जो आणवेदि । निष्क्रान्ता ॥ यदार्य आज्ञापयति ।

**चाणक्यः** । शार्ङ्गरव । उच्यन्तामस्मद्वचनाद्विश्वावसुप्रभृतयस्त्रयो भ्रातरो वृषलाद् भूषणानि प्रतिगृह्य भवद्भिरहं द्रष्टव्य इति ।

**शिष्यः** । यदाज्ञापयत्युपाध्यायः । निष्क्रान्तः ।

**चाणक्यः** । उत्तरोऽयं लेखार्थः । पूर्वस्तु कथमस्तु । विचिन्त्य । आम् । उपलब्धवानस्मि प्रणिधिभ्यो यथा तस्य म्लेच्छराजलोकस्य मध्ये प्रधानतमाः पञ्च राजानः परया सुहृत्तया राक्षसमनुवर्तन्ते । ते यथा—

**कौलूताश्चित्रवर्मा मलयनरपतिः सिंहनादो नृसिंहः**
**काश्मीरः पुष्कराक्षः क्षतरिपुमहिमा सैन्धवः सिन्धुषेणः ।**
**मेघाख्यः पञ्चमोऽसौ[1] पृथुतुरगबलः पारसीकाधिराजो**
**नामान्येषां लिखामि ध्रुवमहमधुना चित्रगुप्तः प्रमार्ष्टु ॥१९॥**

विचिन्त्य । अथ वा न लिखामि । सर्वमनभिव्यक्तमेवास्ताम् । शार्ङ्गरव ।

**शिष्यः** । प्रविश्य । उपाध्याय । आज्ञापय ।

**चाणक्यः** । वत्स श्रोत्रियाक्षराणि प्रयत्नालिखितान्यस्फुटानि भवन्ति । तदुच्यतामस्मद्वचनात् सिद्धार्थकः । कर्णे कथयति । एभिरक्षरैः केनापि कस्यापि किमपि स्वयं वाच्यमित्यदत्तबाह्यनामानं लेखं शकटदासेन लेखयित्वा मामुपतिष्ठस्व । न चाख्येयमस्मै चाणक्यो लेखयतीति ।

**शिष्यः** । यदाज्ञापयत्युपाध्यायः । निष्क्रान्तः ।

**चाणक्यः** । हन्त जितो मलयकेतुः ।

१ अस्मिन् M.T.

प्रविश्य लेखहस्तः । **सिद्धार्थकः** । जेदु अज्जो । अअं सो सअडदासेण लिहिदो लेहो ॥ जयत्वार्यः । अय स शकटदासेन लिखितो लेखः ।

**चाणक्यः** । अहो दर्शनीयान्यक्षराणि । अनुवाच्य । भद्र अनया मुद्रया मुद्रयैनम् ।

**सिद्धार्थकः** । जं अज्जो आणवेदि । *लेख मुद्रयित्वा । अज्ज अअं मुद्दिदो लेहो । किं अवरं अणुच्चिट्ठीअदु[1] ॥ यदार्य आज्ञापयति । . . . आर्य अयं मुद्रितो लेखः । किमपरमनुष्ठीयताम् ।

**चाणक्यः** । प्रथमं तावद्वध्यस्थानं गत्वा घातकाः †सशेषं दक्षिणाक्षि संकोचसंज्ञां ग्राहयितव्याः । ततस्तेषु गृहीतसंज्ञेषु भयापदेशादितस्ततः प्रद्रुतेषु शकटदासो वध्यस्थानादपनीय राक्षसं प्रापयितव्यः । तस्मात् सुहृत्प्राणपरिरक्षणपरितुष्टात् पारितोषिकं परिगृह्य राक्षस एव कंचित् कालं सेवितव्यः । ततः प्रत्यासन्नेषु परेषु प्रयोजनमिदमनुष्ठेयम् । कर्णे । एवमिव ।

**सिद्धार्थकः** । जं अज्जो आणवेदि ॥ यदार्य आज्ञापयति ।

**चाणक्यः** । शार्ङ्गरव ।

प्रविश्य । **शिष्यः** । उपाध्याय । आज्ञापय ।

**चाणक्यः** । उच्यतामस्मद्वचनात् कालपाशिको दण्डपाशिको[2] यथा वृषलः समाज्ञापयति । य एष क्षपणको जीवसिद्धिर्नाम राक्षसप्रयुक्तया विषकन्यया पर्वतेश्वरं घातितवान् स एनमेव दोषं प्रख्याप्य सनिकारं नगरान्निर्वास्यतामिति ।

**शिष्यः** । यदाज्ञापयत्युपाध्यायः । इति परिक्रामति ।

१ After this all but H (M) insert चाणक्यः। भद्र कस्मिंश्चिदाप्तजनानुष्ठेये कर्मणि त्वां व्यापारयितुमिच्छामि । सिद्धार्थकः । सहर्षम् । अज्ज अणुगिहिदोम्हि । आणवेदु अज्जो किं इमिणा दासजणेण अणुचिट्ठिदव्वं ॥ आर्य अनुगृहीतोऽस्मि । आज्ञापयत्वार्यः किमनेन दासजनेनानुष्ठातव्यम् । २ दण्डपाशिकश्च in all but H.(M)

*Read तथा करोति in place of लेखं मुद्रयित्वा and restore सिद्धार्थकः। अज्ज अअं मुद्दिदो लेहो । किं अवरं अणुचिट्ठिअदु । and the next two speeches to their right place after शिष्यः, (line 32).

† Read सशेषं भयसंज्ञां ग्राहयितव्याः। ततस्तेषु भयाप"

**चाणक्यः** । वत्स तिष्ठ । योऽयमपरः कायस्थः शकटदासो नाम राक्षसप्रयुक्तो नित्यमस्मच्छरीरमभिद्रोग्धुं प्रयतते स चाप्येनं दोषं प्रख्याप्य शूलमारोप्यतां गृहजनश्चास्य बन्धनागारं प्रवेश्यतामिति ।

**शिष्यः** । यदाज्ञापयत्युपाध्यायः । निष्क्रान्तः ।

**चाणक्यः** । चिन्तां नाटयित्वात्मगतम् । अपि नाम दुरात्मा राक्षसो गृह्येत ।

**सिद्धार्थकः** । अज्ज गहीदो[1]– ॥ आर्य गृहीतः-- ।

**चाणक्यः** । सहर्षमात्मगतम् । हन्त गृहीतो राक्षसः ।

**सिद्धार्थकः** । अज्जसंदेसो[2] । ता गमिस्सं कज्जसिद्धीए ॥ आर्यसंदेशः । तद्गमिष्यामि कार्यसिद्धये ।

**चाणक्यः** । सङ्गुलिमुद्रं लेखमर्पयित्वा । भद्र गम्यताम् । अस्तु ते कार्यसिद्धिः ।

**सिद्धार्थकः** । तह । निष्क्रान्तः ॥ तथा ।

**शिष्यः** । प्रविश्य । उपाध्याय कालपाशिको दण्डपाशिकि[3] उपाध्यायं विज्ञापयेति[4] । इदमनुष्ठीयते देवस्य चन्द्रगुप्तस्य शासनमिति ।

**चाणक्यः** । शोभनम् । वत्स । मणिकारश्रेष्ठिनं चन्दनदासमिदानीं द्रष्टुमिच्छामि ।

**शिष्यः** । यदाज्ञापयत्युपाध्यायः । निष्क्रम्य चन्दनदासेन सह प्रविश्य । इत इतः श्रेष्ठिन् ।

**चन्दनदासः** । स्वगतम् ।

**चाणक्कम्मि अकरुणे सहसा सद्दाविदस्स वट्टेदि ।**
**णिद्दोसस्स वि सङ्का किं उण संजाददोसस्स ॥ २० ॥**

चाणक्येनाकरुणेन सहसा शब्दायितस्य वर्तते ।
निर्दोषस्यापि शङ्का किं पुनः संजातदोषस्य ॥

१ प्रकाशम् । भद्र कोऽयं गृहीतः । added after this M.T.H —२ गिहिदो (मए) inserted before this M.T.H.—३ दण्डपाशिकश्च in all but H (M).—४ विज्ञापयतः in all but H(M).-

ता भणिदा मए धणसेणप्पमुहा णिअणिवेससंठिदा तिण्णि सांवगा कदावि चाणक्कहदओ गेहं मे विचिण्णावेदि । ता अववाहेह भट्टिणो अमच्चरक्खसस्स घरअणं । मह दाव जं होदि तं होदु त्ति ॥ तद् भणिता मया धनसेनप्रमुखा निजनिवेशसंस्थितास्त्रयः श्रावकाः। कदापि चाणक्यहतको गेहं मे विचाययति । तस्मादपवाहयत भर्तुरमात्यराक्षसस्य गृहजनम् । मम तावद्यद्भवति तद्भवत्विति ।

**शिष्यः** । भोः श्रेष्ठिन् । इत इतः ।

**चन्दनदासः** । अज्ज अअं आअच्छामि । उभौ परिक्रामतः ॥ आर्य अयमागच्छामि ।

**शिष्यः** । उपसृत्य । उपाध्याय अयं श्रेष्ठी चन्दनदासः ।

**चन्दनदासः** । जेदु अज्जो ॥ जयत्वार्यः ।

**चाणक्यः** । विलोक्य । श्रेष्ठिन् स्वागतम् । इदमासनम् । आस्यताम् ।

**चन्दनदासः** । प्रणम्य । *किं ण जाणादि अज्जो जह अणुचिदो उवआरो परिहवादो वि महन्तं दुःखं उप्पादेदि । ता इह य्येव उचिदाए भूमीए उवविसामि ॥ किं न जानात्यार्यो यथानुचित उपचारः परिभवादपि महद् दुःखमुत्पादयति । तस्मादिहैवोचितायां भूमावुपविशामि ।

**चाणक्यः** । भोः श्रेष्ठिन् मा मैवम् । उचितमेवेदस्मद्विधैर्भवतः । तदुपविश्यतामासन एव ।

**चन्दनदासः** । स्वगतम् । उवक्खित्तं णेण दुट्ठेण किंवि । प्रकाशम् । जं अज्जो आणवेदि ।उपविष्टः ॥ उपक्षिप्तमनेन दुष्टेन किमपि ।..यदार्य आज्ञापयति ।

**चाणक्यः** । भोः श्रेष्ठिन् चन्दनदास अपि प्रचीयन्ते संव्यवहाराणां लाभाः[2] ।

**चन्दनदासः** । अह[3] इं । अज्जस्स प्पसाएण अखण्डिदा वणिज्जा ॥ अथ किम् । आर्यस्य प्रसादेनाखण्डिता वणिज्या ।

**चाणक्यः** । न खलु चन्द्रगुप्तदोषा अतिक्रान्तपार्थिवगुणान् स्मारयन्ति प्रकृतीः ।

---

१ वाणिजि आ M. घरअणसेवआ H. २ वृद्धिलाभाः T. ३ स्वगतम् । अच्चादरो सङ्कणीओ । प्रकाशम् । inserted before this T.

* Read णं in place of किं ण.

**चन्दनदासः।** कर्णौ पिधाय । सन्तं पावं । *सारअणिसासमुग्गदेण विअ पुण्णिमाचन्देण देवेण चन्दसिरिणा अहिअं णन्दन्ति पकिदीओ ॥ शान्तं पापम् । शारदनिशासमुद्गतेनेव पूर्णिमाचन्द्रेण श्रीचन्द्रेणाधिकं नन्दन्ति प्रकृतयः ।

**चाणक्यः ।** भोः श्रेष्ठिन् यद्येवं प्रीताभ्यः प्रकृतिभ्यः प्रतिप्रियमिच्छन्ति राजानः ।

**चन्दनदासः ।** आणवेदु अज्जो †किं केत्तिअं इमादो जणादो इच्छीअदि त्ति ॥ आज्ञापयत्वार्यः किं कियदस्माज्जनादिष्यत इति ।

**चाणक्यः ।** भोः श्रेष्ठिन् चन्द्रगुप्तराज्यमिदं न नन्दराज्यम् । नन्दस्यार्थरुचेरर्थसम्बन्धः प्रीतिमुत्पादयति । चन्द्रगुप्तस्य तु भवतामपरिक्लेश एव ।

**चन्दनदासः ।** सहर्षम् । अज्ज अणुगिहीदोह्मि॥ आर्य अनुगृहीतोऽस्मि ।

**चाणक्यः ।** स चापरिक्लेशः कथं [१]भवतीति प्रष्टव्या वयम् ।

**चन्दनदासः ।** आणवेदु अज्जो ॥ आज्ञापयत्वार्यः ।

**चाणक्यः ।** संक्षेपतो राजन्यविरुद्धाभिः प्रवृत्तिभिः ।

**चन्दनदासः ।** अज्ज को उण अधण्णो रण्णा विरुद्धो त्ति अज्जेण अवगच्छीअदि ॥ आर्य कः पुनरधन्यो राज्ञा विरुद्ध इत्यार्येणावगम्यते ।

**चाणक्यः ।** भवानेव तावत् प्रथमः ।

**चन्दनदासः ।** कर्णौ पिधाय । सन्तं पावं । कीदिसो उण तिणाणं अग्गिणा सह विरोहो ॥ शान्तं पापम् । कीदृशः पुनस्तृणानामग्निना सह विरोधः ।

**चाणक्यः ।** ईदृशो विरोधो यत्त्वं राजापथ्यकारिणो राक्षसस्य गृहजनं गृहेऽभिरक्षसि ।

**चन्दनदासः ।** अज्ज अलिअं एदं केणवि अणज्जेण अज्जस्स णिवेदिदं ॥ आर्य अलीकमेतत् केनाप्यनार्येणार्याय निवेदितम् ।

१ आविर्भवति M.r.H, भवति H. (M).

* Restore the passage to its original metrical form as under-

णं सरअपुण्णमासी समुग्गएण विअ पुण्णचन्देण ।
देवेण चन्दसिरिणा अहिअं णन्दन्ति पकिदीओ ॥
ननु शरत्पौर्णमासीसमुद्गतेनेव पूर्णचन्द्रेण ।
देवेन चन्द्रश्रियाधिकं नन्दन्ति प्रकृतयः ॥

† Read केत्तिअं अत्थजादं in place of किं केत्तिअं.

**चाणक्यः**। भोः श्रेष्ठिन् अलमाशङ्कया । भीताः पूर्वराजपुरुषाः पौराणामनिच्छतामपि गृहे गृहजनं निक्षिप्य देशान्तरं व्रजन्ति । तत्प्रच्छादनमात्रं दोषमुत्पादयति ।

**चन्दनदासः**। एव्वं इदं । तस्सिं संभमे आसि अह्म घरे अमच्चरक्खसस्स घरअणो ॥ एवमिदम् । तस्मिन् सम्भ्रम आसीदस्माकं गृहेऽमात्यराक्षसस्य गृहजनः ।

**चाणक्यः**। पूर्वमलीकमिदानीमासीदिति परस्परविरोधिनी वचने ।

**चन्दनदासः**। अज्ज एत्तिअं अत्थि मे वाआच्छलं ॥ आर्य एतावदस्ति मे वाक्छलम् ।

**चाणक्यः**। भोः श्रेष्ठिन् चन्द्रगुप्ते राजन्यपरिग्रहश्छलानाम् । तत्समर्पय राक्षसस्य गृहजनम् । अच्छलं भवतु भवतः ।

**चन्दनदासः**। अज्ज णं विण्णवेमि तस्सिं संभमे आसि अह्म घरे अमच्चरक्खसस्स घरअणो त्ति ॥ आर्य ननु विज्ञापयामि तस्मिन् संभ्रम आसीदस्माकं गृहेऽमात्यराक्षसस्य गृहजन इति ।

**चाणक्यः**। अथेदानीं क्व गतः ।

**चन्दनदासः**। ण जाणामि ॥ न जानामि ।

**चाणक्यः**। स्मितं कृत्वा । कथं न ज्ञायते नाम । भोः श्रेष्ठिन् शिरसि भयं दूरे च तत्प्रतीकारः । [2]अन्यच्च नन्दमिव विष्णुगुप्तः (इत्यर्धोक्ते लज्जां नाटयित्वा) चन्द्रगुप्तममात्यराक्षसः समुच्छेत्स्यतीति मैव मंस्थाः । पश्य ।

**विक्रान्तैर्नयशालिभिः सुसचिवैः श्रीर्वक्रनासादिभि-**
**र्नन्दे जीवति सान्वये न गमिता स्थैर्यं चलन्ती मुहुः ।**
**तामेकत्वमुपागतां द्युतिमिव प्रह्लादयन्ती जगत्**
**कश्चन्द्रादिव चन्द्रगुप्तनृपतेः कर्तुं व्यवस्येत् पृथक् ॥ २१ ॥**

अपि च

आस्वादितद्विरदशोणितशोणशोभां
संध्यारुणामिव कलां शशलाञ्छनस्य ।
जृम्भाविदारितमुखस्य मुखात् स्फुरन्तीं
को हर्तुमिच्छति हरेः परिभूय दंष्ट्राम् ॥ २२

१ एत्यन्तरे H. अत्यन्तरे D.(S) २ Before this M.T.H. insert चन्द०। स्वगतम् । उवरिं घणा......समाविद्धो ॥ which is omitted in H (M.K.P.&c).

**चन्दनदासः** । स्वगतम् । फलेण संवादिदं सोहदि दे विकत्थिदम् ॥ फलेन संवादित शोभते ते विकत्थितम् ।

नेपथ्य उत्सारणा क्रियते ।

**चाणक्यः** । शार्ङ्गरव ज्ञायतां किमेतत् ।

**शिष्यः** । यदाज्ञापयत्युपाध्यायः । निष्क्रम्य पुनः प्रविश्य । उपाध्याय एष देवस्य चन्द्रगुप्तस्याज्ञया राजापथ्यकारी क्षपणको जीवसिद्धिः सनिकारं नगरान्निर्वास्यते ।

**चाणक्यः** । अहह क्षपणकः । अथ वानुभवतु राजापथ्यकारित्वस्य फलम् । भोः श्रेष्ठिन् एवमपथ्यकारिषु तीक्ष्णदण्डो राजा । तत् क्रियतां पथ्यं सुहृद्वचः । समर्प्यतां राक्षसस्य गृहजनः । अनुभूयतां चिरं विचित्रो राजप्रसादः ।

**चन्दनदासः** । अज्ज णत्थि मे गेहे अमच्चघरअणो ॥ आर्य नास्ति मे गेहेऽमात्यगृहजनः ।

नेपथ्ये पुनरुत्सारणा क्रियते ।

**चाणक्यः** । शार्ङ्गरव ज्ञायतां पुनः किमेतत् ।

**शिष्यः** । यदाज्ञापयत्युपाध्यायः । निष्क्रम्य पुनः प्रविश्य । उपाध्याय अयमपि राजापथ्यकारी कायस्थः शकटदासः शूलमारोपयितुं नीयते ।

**चाणक्यः** । स्वकर्मफलभाग्भवतु । भोः श्रेष्ठिन् एवमपथ्यकारिषु तीक्ष्णदण्डो राजा न मर्षयिष्यति राक्षसकलत्रप्रच्छादनं भवतः । तद्रक्ष्यतां परकलत्रेणात्मनः कलत्रं जीवितं च ।

**चन्दनदासः** । अज्ज किं मे भयं दावेसि । सन्तं वि गेहे अमच्चरक्खसस्स घरअणं ण समप्पेमि किं उण असन्तं ॥ आर्य किं मा भय दर्शयसि । सन्तमपि गेहेऽमात्यराक्षसस्य गृहजन न समर्पयामि कि पुनरसन्तम् ।

**चाणक्यः** । एष ते निश्चयः ।

**चन्दनदासः** । बाढ । एसो मे णिच्छओ ॥ बाढम् । एष मे निश्चयः ।

**चाणक्यः** । स्वगतम् । साधु चन्दनदास साधु ।

**सुलभेष्वर्थजातेषु[1] परसंवेदने[2] जनः ।**
**क इदं दुष्करं कुर्यादिदानीं शिबिना विना ॥ २४ ॥**

---

१ लाभेषु in all but H(M.) २ परस्योद्वेजने H(M.)

प्रकाशम् । *श्रेष्ठिन् एष ते निश्चयः ।

**चन्दनदासः** । बाढं ॥ बाढम्

**चाणक्यः** । सक्रोधम् । दुरात्मन् दुष्टवणिक् अनुभूयतां तर्हि राजकोपः ।

**चन्दनदासः** । सज्जोह्मि । अणुचिट्ठदु अज्जो अत्तणो अहिआरस्स अणुरूअं ॥ सज्जोऽस्मि । अनुतिष्ठत्वार्य आत्मनोऽधिकारस्यानुरूपम् ।

**चाणक्यः** । शार्ङ्गरव उच्यतामस्मद्वचनात् कालपाशिको दण्डपाशिकः[1] । शीघ्रमयं दुष्ट वणिक्— । अथ वा तिष्ठतु । उच्यतां दुर्गपालो विजयपालः[2] । गृहीतसारमेनं सपुत्रकलत्रं संयम्य तावद्रक्ष यावन्मया वृषलाय कथ्यते । स एवास्य प्राणहरं दण्डमाज्ञापयिष्यति ।

**शिष्यः** । यदाज्ञापयत्युपाध्यायः । श्रेष्ठिन् इत इतः ।

**चन्दनदासः** । उत्थाय । अज्ज अअं आअच्छामि । स्वगतम् । दिट्ठिआ मित्तकज्जेण मे विणासो ण पुरिसदोसेण ॥ आर्य अयमागच्छामि । दिष्ट्या मित्रकार्येण मे विनाशो न पुरुषदोषेण ।

परिक्रम्य शिष्येण सह निष्क्रान्तः ।

**चाणक्यः** । सहर्षम् । हन्त लब्ध इदानीं राक्षसः । कुतः ।

> **त्यजत्यप्रियवत् प्राणान् यथा तस्यायमापदि ।**
> **तथैवास्यापदि प्राणा ध्रुवं तस्यापि न प्रियाः ॥ २५ ॥**

नेपथ्ये कलकलः ।

प्रविश्य **शिष्यः** । उपाध्याय एष खलु सिद्धार्थकः शाकटदासं वध्यमानं वध्यभूमेरादायापक्रान्तः ।

**चाणक्यः** । स्वगतम् । साधु सिद्धार्थक कृतः कार्यारम्भः । प्रकाशं सक्रोधम् । कथम् अपक्रान्तः । वत्स उच्यतां भागुरायणो यथा त्वरितमेनं संभावय ।

निष्क्रम्य प्रविश्य च । **शिष्यः** । कष्टमपक्रान्तो भागुरायणोऽपि ।

---

१ दण्डपाशिकश्च in all but H(M) २ विजयपालश्च M.

* Omit श्रेष्ठिन् एष ते निश्चयः ॥ चन्दनदासः । बाढं ॥ चाणक्यः । reading दुरात्मन् दुष्ट° in continuation of प्रकाशम् etc. going before.

**चाणक्यः** । स्वगतम् । व्रजतु कार्यसिद्धये । प्रकाशं सक्रोधम् । वत्स उच्यन्तां भद्रभटपुरुदत्तडिङ्गरातबलगुप्तराजसेनरोहिताक्षविजयवर्माणः । शीघ्रमनुसृत्य [1] गृह्येतां द्वावप्येताविति ।

**शिष्यः** । तथा । निष्क्रम्य पुनः प्रविश्य सविषादम् । हा धिक् सर्वमेव तन्त्रमाकुलीभूतम् । तेऽपि भद्रभटप्रभृतयः प्रथमत एवा[2]प्रभातायां रजन्यामपक्रान्ताः ।

**चाणक्यः** । स्वगतम् । सर्वेषां शिवाः सन्तु पन्थानः । प्रकाशम् । वत्स अलं विषादेन ।

**ये याताः किमपि प्रधार्य हृदये पूर्वं गता एव ते**
**ये तिष्ठन्ति भवन्तु तेऽपि गमने कामं [3]प्रकामोद्यताः ।**
**एका केवलमर्थसाधनविधौ सेनाशतेभ्योऽधिका**
**नन्दोन्मूलनदृष्टवीर्यमहिमा बुद्धिस्तु मा गान्मम ॥ २६ ॥**

उत्थाय । एष दुरात्मनो भद्रभटप्रभृतीनाहरामि । प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वात्मगतम् । दुरात्मन् राक्षस क्वेदानीं गमिष्यसि । एषोऽहमचिराद् भवन्तम्

**स्वच्छन्दमेकचरमुज्ज्वलदानशक्ति-**
**[4]मुत्सेकिनं [5]बलमदेन [6]विगाह्यमानम् ।**
**बुद्ध्या निगृह्य वृषलस्य कृते क्रियाया-**
**मारण्यकं गजमिव [7]प्रवणीकरोमि ॥ २७ ॥**

निष्क्रान्तौ ।

इति मुद्रालाभो नाम प्रथमोऽङ्कः ।

---

१ गृह्यतां दुरात्मा भागुरायणः (इति) M.T.; गृह्यतां दुरात्मा शकटदास इति। H. गृह्येतां द्वावप्येताविति H(K.C.L.). २ उषसि T.; अप्रभातायाम् M.H. ३ प्रकामोद्यमा in all but H(N.). ४ उत्सेकिना in all but H(M.). ५ मदजलेन T.H( M. ). ६ विगाह्यमानम् M.T. विदह्यमानम् H. विगाह्यमानम् H(K.). ७ प्रगुणी in all but T(M.R.).

## राक्षसविचारो नाम
## द्वितीयोऽङ्कः ।

ततः प्रविशत्याहितुण्डिकः ।

**आहितुण्डिकः ।**

**जाणन्ति तन्तजुत्तिं जहट्ठिदं मण्डलं अहिलिहन्ति ।**
**जे मन्तरक्खणपरा ते *सप्पणराहिवे [1]उवअरन्ति ॥ १ ॥**

आकाशे । अज्ज किं तुमं भणासि । को तुमं त्ति । अहं खु आहितुण्डिओ जिण्णविसो णाम । किं भणासि । अहं वि अहिणा खेलिदुं इच्छामि त्ति । अह कदरं उण अज्जो वित्तिं उवजीवदि । किं भणासि । राअउलसेवओह्मि त्ति । णं खेलदि ज्जेव अज्जो अहिणा । कहं विअ । †अमन्तोसहिकुसलो वालग्गाही मत्तो मअंगआरोहो जिदकासी राअउलसेवओ त्ति एदे तिण्णि विणासमणुहोन्ति । कहं दिट्ठमत्तो अदिक्कन्तो । पुनराकाशे । अज्ज किं तुमं भणासि । किं एदेसु पेडअसमुग्गएसु त्ति । जीविआए संपादआ सप्पा । किं भणासि । पेक्खिदुं इच्छामि त्ति । पसीददु अज्जो । अट्ठाणं खु एदं । ता जदि कोदूहलं एहि एदस्सिं आवासे दंसेमि । किं भणासि । एदं खु अमच्चरक्खसस्स गेहं । णत्थि अह्मारिसाणं इह पवेसो त्ति । तेण गच्छदु अज्जो । जीविआए पसादेण अत्थि मे एत्थ पवेसो । कधं एसो वि अदिक्कन्तो । स्वगतम् । आश्चर्यम् । चाणक्यमतिपरिगृहीतं चन्द्रगुप्तमवलोक्य विफलमिव राक्षसप्रयत्नमवगच्छामि । राक्षसमतिपरिगृहीतं च मलयकेतुमवलोक्य चलितमिव राज्याच्चन्द्रगुप्तमवगच्छामि । कुतः ।

**कौटिल्यधीरज्जुनिबद्धमूर्तिं मन्ये स्थिरां मौर्यनृपस्य लक्ष्मीम् ।**
**उपायहस्तैरपि राक्षसेन निकृष्यमाणामिव लक्षयामि ॥ २ ॥**

तदेवमनयोर्बुद्धिशालिनोः सुसचिवयोर्विरोधे संशयितेव राजलक्ष्मीः ।

१ होन्ति H (M.). २ लद्धाहिआरो added before this in all but H (M.). ३ भट्टिणो added before this in all but H (M.). ४ नन्दकुललक्ष्मीः T.

* Read णिवे । † Restore the passage to its original metrical form as under:—णोसहिकुसलो वालग्गाही मत्तो मतङ्गआरोहो । जिअकासी राउलसेवओ त्ति अ विणासमणुहोन्ति ॥

विरुद्धयोर्भृशमिव [1]मन्त्रिमुख्ययो-
र्महावने वनगजयोरिवान्तरे।
अनिश्चयाद् गजवशयेव भीतया
गतागतैर्ध्रुवमिह खिद्यते श्रिया ॥ ३ ॥

तद्यावदमात्यराक्षसं पश्यामि । इति परिक्रम्य द्वारि स्थितः ॥

जानन्ति तन्त्रयुक्तिं यथास्थितं मण्डलमभिलिखन्ति ।
ये मन्त्ररक्षणपरास्ते सर्पनराधिपानुपचरन्ति ॥

...। आर्य किं त्वं भणसि । कस्त्वमिति । अहं खल्वाहितुण्डिको जीर्णविषो नाम । किं भणसि । अहमप्यहिना खेलितुमिच्छामीति । अथ कतरां पुनरार्यो वृत्तिमुपजीवति । किं भणसि । राजकुलसेवकोऽस्मीति । ननु खेलत्येवार्योऽहिना । कथमिव । अमन्त्रौषधिकुशलो व्यालग्राही मत्तो मतङ्गजारोहो । जितकाशी राजकुलसेवक इत्येते त्रयो विनाशमनुभवन्ति । कथम्। दिष्टमात्रोऽतिक्रान्त. ।...आर्य किं त्वं भणसि । किमेतेषु पेटकसमुद्गकेष्विति । जीविकायाः संपादका सर्पाः । किं भणसि । प्रेक्षितुमिच्छामीति । प्रसीदत्वार्यः अस्थानं खल्वेतत् । तस्माद्यदि कुतूहलमेह्येतस्मिन्नावासे दर्शयामि । किं भणसि । एतत् खल्वमात्यराक्षसस्य गेहं । नास्त्यस्मादृशानामिह प्रवेश इति । तेन गच्छत्वार्यः । जीविकायाः प्रसादनास्तिमेऽत्र प्रवेशः । कथमेषोऽप्यतिक्रान्तः ।

ततः प्रविशत्यासनस्थः पुरुषेणानुगम्यमानः सचिन्तो राक्षसः ।

राक्षसः । सबाष्पम् । कष्टम् ।

वृष्णीनामिव नीतिविक्रमगुणव्यापारशान्तद्विषां
नन्दानां विपुले कुलेऽकरुणया नीते नियत्या क्षयम्।
चिन्तावेशसमाकुलेन मनसा रात्रिंदिवं जाग्रतः
[2]सर्वेयं मम चित्रकर्मरचना भित्तिं विना वर्तते ॥४॥

अथ वा

नेदं विस्मृतभक्तिना न विषयव्यासङ्गमूढात्मना
प्राणप्रच्युतिभीरुणा न च मया नात्मप्रतिष्ठार्थिना।
अत्यर्थं परदास्यमेत्य निपुणं नीतौ मनो दीयते
देवः स्वर्गगतोऽपि शत्रुवधेनाराधितः स्यादिति ॥५॥

आकाशमवलोकयन् । भगवति कमलालये भृशमगुणज्ञासि ।

आनन्दहेतुमपि देवमपास्य नन्दं
सक्तासि किं कथय वैरिणि मौर्यपुत्रे।

१ इह M.T.H. इव H.(B.) २ सैवेयं in all but H.(M.N.)

दानाम्बुराजिरिव गन्धगजस्य नाशे
तत्रैव किं न चपले प्रलयं गतासि ॥६॥

अपि चानभिजाते

पृथिव्यां किं दग्धाः प्रथितकुलजा भूमिपतयः
पतिं पापं मौर्यं यदसि कुलहीनं कृतवती ।
प्रकृत्या वा काशप्रभवकुसुमप्रान्तचपला
पुरन्ध्रीणां प्रज्ञा पुरुषगुणविज्ञानविमुखी ॥७॥

अविनीते तदहमाश्रयोन्मूलनेनैव त्वामकामा करोमि । विचिन्त्य । मया तावत् सुहृत्तमस्य चन्दनदासस्य गृहे गृहजनं निक्षिप्य नगरा-
३न्निर्गच्छता न्याय्यमनुष्ठितम् । कुतः । कुसुमपुराभियोगं प्रत्यनुदासीनो राक्षस इति तत्रस्थानामस्माभिः सहैककार्याणां देवपादोपजीविनां नोद्यमः शिथिलीभविष्यति । चन्द्रगुप्तशरीरमभिद्रोग्धुमस्मत्प्रयुक्तानां
६तीक्ष्णरसदादीनामुपसंग्रहार्थं परकृत्योपजापार्थं च महता कोशसंचयेन स्थापितः शकटदासः । प्रतिक्षणमरातिवृत्तान्तोपलब्धये तत्संहतिभेदनाय च व्यापारिताः सुहृदो जीवसिद्धिप्रभृतयः । तत् किं बहुना ।

इष्टात्मजः सपदि सान्वय एव देवः
शार्दूलपोतमिव यं परिपुष्य नष्टः ।
[2]तस्यैष बुद्धिविशिखेन भिनद्मि मर्म
वर्मीभवेद्यदि न दैवममृष्यमाणम्[3] ॥८॥

ततः प्रविशति कञ्चुकी ।

**कञ्चुकी ।**

काम नन्दमिव प्रमथ्य जरया चाणक्यनीत्या यथा
धर्मो मौर्य इव क्रमेण नगरे नीतः प्रतिष्ठां मयि ।
तं संप्रत्युपचीयमानमपि मे लब्धान्तरः सेवया
लोभो राक्षसवज्जयाय यतते जेतुं न शक्नोति च ॥९॥

परिक्रम्य । अयममात्यराक्षसः । उपसृत्य । स्वस्ति भवते ।

**राक्षसः ।** आर्य जाजले अभिवादये । प्रियंवदक आसनमत्रभवतः ।

३**पुरुषः ।** एदं आसणं । उवविसदु अज्जो ॥ एतदासनम् । उपविशत्वार्यः ।

**कञ्चुकी ।** उपविश्य । कुमारो मलयकेतुरमात्यं विज्ञापयति । चिरात्प्रभृत्यार्यः परित्यक्तोचितशरीरसंस्कार इति पीड्यते मे हृदयम् ।

---

१ प्रकृत्युप° H. २ तस्यैव M.T.H. ३ अमृष्यमानम् M. असह्यमानम् T.H.

यद्यपि स्वामिगुणा न शक्यन्ते विस्मर्तुं तथापि मद्विज्ञापनां मानयितुमर्हत्यार्यः । आभरणं दर्शयित्वा । इदमाभरण कुमारेण स्वशरीरादवतार्य प्रेषितं परिदधात्वमात्यः ।

**राक्षसः** । आर्य जाजले विज्ञाप्यतामस्मद्वचनात् कुमारः विस्मृता एव मया भवद्गुणपक्षपातेन स्वामिगुणाः । किं तु ।

**न तावन्निर्वीर्यैः परपरिभवाक्रान्तिकृपणै-**
**र्वहाम्यङ्गैरेभिः प्रतनुमपि संस्काररचनाम् ।**
**न यावन्निःशेषक्षपितरिपुपक्षस्य निहितं**
**सुगाङ्गे [1]हेमाङ्गं नृवर तव सिंहासनमिदम् ॥१०॥**

**कञ्चुकी** । अमात्ये नेतरि सर्वमपि सुलभं कुमारस्य । तत् प्रतिमान्यतां कुमारस्य प्रथमः प्रणयः ।

**राक्षसः** । आर्य कुमार इवानतिक्रमणीयवचनो भवान् । तदनुष्ठीयते कुमारस्याज्ञा ।

**कञ्चुकी** । भूषयित्वा । स्वस्ति भवते । साधयाम्यहं ।

**राक्षसः** । आर्य अभिवादये ।

कञ्चुकी निष्क्रान्तः ।

**राक्षसः** । प्रियंवदक ज्ञायतां कोऽप्यस्मद्दर्शनार्थी द्वारि तिष्ठति ।

**पुरुषः** । जं अमच्चो आणवेदि । परिक्रम्याहितुण्डिक दृष्ट्वा । अज्ज को तुमम् ॥ यदमात्य आज्ञापयति ।... आर्य कस्त्वम् ।

**आहितुण्डिकः** । भद्द अहं खु आहितुण्डिओ । इच्छामि अमच्चस्स पुरदो सप्पेहिं खेलिदुं ॥ भद्र अहं खल्वाहितुण्डिकः । इच्छाम्यमात्यस्य पुरतः सर्पैः खेलितुम् ।

**पुरुषः** । चिट्ठ जाव अमच्चस्स णिवेदेमि । राक्षसमुपसृत्य । अमच्च एसो ख सप्पजीवी इच्छदि सप्पेहिं अमच्चस्स पुरदो खेलिदुं ॥ तिष्ठ यावदमात्याय निवेदयामि । अमात्य एष खलु सर्पजीवीच्छति सर्पैरमात्यस्य पुरतः खेलितुम् ।

**राक्षसः** । वामाक्षिस्पन्दनं सूचयित्वा स्वगतम् । कथम् *प्रथममेव सर्पदर्शनम् । प्रकाशम् । प्रियंवदक न नः कुतूहलं [2]सर्पदर्शने । तत् परितोष्य विसर्जयैनम् ।

१ हेमाङ्क M.T H. २ सर्पेषु T.H. *Omit प्रथममेव

**पुरुषः** । जं अमच्चो आणवेदि । आहितुण्डिकमुपसृत्य । अज्ज एसो खु दे [1]दंसणफलेण अमच्चो पसादं करेदि । ण उण दंसणेण ॥ यदमात्य आज्ञापयति । आर्य एष खलु ते दर्शनफलेनामात्यः प्रसादं करोति । न पुनर्दर्शनेन ।

**आहितुण्डिकः** । भद्द विण्णवेहि मह वअणेण अमच्चं । ण केवलं अहं सप्पजीवी पाउअकवी खु अहं । ता जइ मे अमच्चो दंसणेण पसादं ण करेदि तदो एदं पत्तअं वाचेदुं पसीददु त्ति ॥ भद्र विज्ञापय मम वचनेनामात्यम् । न केवलमहं सर्पजीवी प्राकृतकविः खल्वहम् । तस्माद्यदि मेऽमात्यो दर्शनेन प्रसादं न करोति तत एतत् पत्रकं वाचयितुं प्रसीदत्विति ।

**पुरुषः** । पत्रं गृहीत्वा राक्षसमुपसृत्य । अमच्च एसो खु आहितुण्डिओ विण्णवेदि । ण केवलं अहं सप्पजीवी पाउअकवी खु अहं । ता जइ मे अमच्चो दंसणेण पसादं ण करेदि तदो एदं पत्तअं वाचेदुं पसीददु त्ति ॥ अमात्य एष खल्वाहितुण्डिको विज्ञापयति । न केवलमहं सर्पजीवी प्राकृतकविः खल्वहम् । तस्माद्यदि मेऽमात्यो दर्शनेन प्रसादं न करोति तत एतत् पत्रकं वाचयितुं प्रसीदत्विति ।

**राक्षसः** । पत्रं गृहीत्वा वाचयति ।

**पाऊण णिरवसेसं कुसुमरसं अत्तणो कुसलदाए ।**
**जं उग्गिरेइ भमरो तं अण्णाणं कुणइ कज्जं ॥११॥**

पीत्वा निरवशेषं कुसुमरसमात्मनः कुशलतया ।
यदुद्गिरति भ्रमरस्तदन्येषामज्ञानां च करोति कार्यम् ॥

विचिन्त्य स्वगतम् । अये कुसुमपुरवृत्तान्तज्ञोऽहं भवत्प्रणिधिरिति गाथार्थः । कार्यव्यग्रत्वान्मनसः प्रभूतत्वाच्च प्रणिधीनां विस्मृतम् । इदानीं स्मृतिरुपलब्धा । व्यक्तमाहितुण्डिकच्छद्मना विराधगुप्तेनानेन भवितव्यम् । प्रकाशम् । प्रियंवदक प्रवेशयैनम् । सुकविरेषः । श्रोतव्यमस्मा[2]भिः सुभाषितम् ।

**पुरुषः** । जं अमच्चो आणवेदि । आहितुण्डिकमुपसृत्य । उपसप्पदु अज्जो ॥ यदमात्य आज्ञापयति ।...उपसर्पत्वार्यः ।

---

१ अदंसणेण (वि.) M.H. २ अस्मात् in all but H. (M.)

**आहितुण्डिकः** । नाट्येनोपसृत्य विलोक्य च स्वगतम् । अयममात्यराक्षसः

**वामां बाहुलतां निवेश्य शिथिलं कण्ठे विवृत्तानना**
**स्कन्धे दक्षिणया बलान्निहितयाप्यङ्के पतन्त्या मुहुः ।**
**गाढालिङ्गनसङ्गपीडितमुखं यस्योद्यमाशङ्किनी**
**मौर्यस्योरसि नाधुनापि कुरुते वामेतरं श्रीः स्तनम् ॥१२॥**

प्रकाशम् । जेदु अमच्चो ॥ जयत्वमात्यः ।

**राक्षसः** । विलोक्य । अये विराध—।[1] इत्यर्धोक्ते विरूढस्मृतिः । प्रियं-[2]वदक भुजङ्गैरिदानीं विनोदयामः । तद्विश्रम्यतां परिजनेन । त्वमपि स्वाधिकारमशून्यं कुरु ।

**पुरुषः** । जं अमच्चो आणवेदि । इति सपरिजनो निष्क्रान्तः ॥ यदमात्य आज्ञापयति ।

**राक्षसः** । सखे विराधगुप्त इदमासनमास्यताम् ।

**विराधगुप्तः** । यदाज्ञापयत्यमात्यः । उपविष्टः ।

**राक्षसः** । निर्वर्ण्य सबाष्पम् । अहो देवपादोपजीविनो जनस्यावस्था ।

**विराधगुप्तः** । अलममात्य शोकेन । नातिचिरादमात्योऽस्मान् पुनः पुरातनीमवस्थामारोपयिष्यति ।

**राक्षसः** । सखे वर्णय कुसुमपुरवृत्तान्तम् ।

**विराधगुप्तः***। अमात्य विस्तीर्णः कुसुमपुरवृत्तान्तः । तत् कुतः प्रभृति वर्णयामि ।

**राक्षसः***। सखे चन्द्रगुप्तस्य †नगरप्रवेशात् प्रभृत्यस्मत्प्रयुक्तैस्तीक्ष्णरसदादिभिः किमनुष्ठितमिति श्रोतुमिच्छामि ।

**विराधगुप्तः** । एष कथयामि । अस्ति तावच्छकयवनकिरातकाम्बोजपारसीकबाह्लीकप्रभृतिभिश्चाणक्यमतिपरिगृहीतैश्चन्द्रगुप्तपर्वतेश्वरबलैरुदधिभिरिव प्रलयोच्चलितसलिलैः समन्तादुपरुद्धं कुसुमपुरम्—

**राक्षसः** । शस्त्रमाकृष्य ससम्भ्रमम् । आः मयि स्थिते कः कुसुमपुरमुपरोत्स्यति । विराधगुप्त क्षिप्रमिदानीम्—

---

१ इत्यर्धोक्ते । ननु प्ररूढश्मश्रुः । T. इत्यर्धोक्ते । विरूढश्मश्रुः । H.

२ ( प्र )वीरक in all but H(M).

*Omit the two speeches. †Read नन्दभवनप्रवेशात् ।

प्राकारं परितः शरासनधरैः *क्षिप्रं परिक्रम्यतां
द्वारेषु द्विरदैः प्रतिद्विपघटाभेदक्षमैः स्थीयताम्।
मुक्त्वा मृत्युभयं प्रहर्तुमनसः शत्रोर्बले दुर्बले
ते निर्यान्तु मया सहैकमनसो येषामभीष्टं यशः॥१३॥

**विराधगुप्तः।** अमात्य अलमावेगेन। वृत्तमिदं वर्ण्यते।

**राक्षसः।** निःश्वस्य। कथं वृत्तमिदम्। मया पुनर्ज्ञातं स एवायं काल [२]इति। शस्त्रमुत्सृज्य सास्रम्। हा देव सर्वार्थसिद्धे स्मरति ते राक्षसः प्रसादानाम्। त्वमत्र संग्रामकाले

यत्रैषा मेघनीला चरति गजघटा राक्षसस्तत्र याया-
देतत् पारिप्लवाम्भःप्लुति तुरगबलं वार्यतां राक्षसेन।
पत्तीनां राक्षसोऽन्तं नयतु बलमिति प्रेषयन् मह्यमाज्ञा-
मज्ञासीः प्रीतियोगात्स्थितमिव नगरे राक्षसानां सहस्रम्॥१४॥

**विराधगुप्तः।** †ततः समन्तादुपरुद्धं कुसुमपुरमवलोक्य बहुदिवसप्रभृति महदुपरोधवैशसमुपरि पौराणां परिवर्तमानमसहमाने तस्यामवस्थायां [२]पौरजनापेक्षया सुरङ्गामेत्यापक्रान्ते तपोवनाय देवे सर्वार्थसिद्धौ स्वामिविरहात् प्रशिथिलीकृतप्रयत्नेषु युष्मद्बलेषु जयघोषणाव्याघातादिमाहमानुमितान्तर्नगरवासिषु पुनर्नन्दराज्यप्रत्यानयनाय सुरङ्गया बहिरपगतेषु [१]युष्मासु चन्द्रगुप्तनिधनाय युष्मत्प्रयुक्तया विषकन्यया घातिते तपस्विनि पर्वतेश्वरे—

**राक्षसः।** सखे पश्याश्चर्यम्।

कर्णेनेव विषाङ्गनैकपुरुषव्यापादिनी रक्षिता
हन्तुं शक्तिरिवार्जुनं बलवती या चन्द्रगुप्तं मया।
सा विष्णोरिव विष्णुगुप्तहतकस्यात्यान्तिकप्रीतये
हैडिम्बेयमिवेत्य पर्वतनृपं तद्वध्यमेवावधीत्॥१५॥

**विराधगुप्तः।** अमात्य दैवस्यात्र कामचारः। किं क्रियताम्।

**राक्षसः।** ततस्ततः।

[३]**विराधगुप्तः।** पितृवधत्रासादपक्रान्ते कुमारे मलयकेतौ विश्वासिते पर्वतेश्वरभ्रातरि वैरोधके प्रकाशिते च चन्द्रगुप्तस्य नन्दभवनप्रवेशे

---

१ नन्द in all but H (M N). २ सुरङ्गामित्य omitted in H(M N)

* Read वप्रं परि क्रम्यता † Omit ततः समन्तादुपरुद्धं कुसुमपुरम्.

च्चाणक्येनाहूयाभिहिताः सर्वे एव कुसुमपुरवासिनः सूत्रधाराः । सांवत्सरिकादेशादद्यार्धरात्रसमये* चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यति । अतः [1]प्रथमद्वारात् प्रभृति संस्क्रियतां राजभवनमिति । ततः सूत्रधारैरभिहितम् । आर्य प्रथममेव देवस्य चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति सूत्रधारेण दारुवर्मणा कनकतोरणन्यासादिभिः संस्कारविशेषैः संस्कृतं प्रथमं राजभवनद्वारम् । अस्माभिरिदानीमभ्यन्तरे संस्कार आधेय इति । ततश्चाणक्यबटुनानादिष्टेन दारुवर्मणा संस्कृतं राजभवनद्वारमिति परितुष्टेन सुचिरं दारुवर्मणो दाक्ष्यं प्रशस्याभिहितम् । अचिरादस्य [2]दाक्ष्यस्य फलं दारुवर्मन्नधिगमिष्यसीति ।

**राक्षसः** । सोद्वेगम् । कुतश्चाणक्यबटोः परितोषः । अफलमनिष्टफलं वा दारुवर्मणः प्रयत्नमवगच्छामि । यदनेन बुद्धिमोहादथ वा राजभक्तिप्रकर्षान्नियोगकालमप्रतीक्षमाणेन जनितश्चाणक्यबटोश्चेतसि बलवान् विकल्पः ।

**विराधगुप्तः** । ततश्चाणक्यहतकेनानुकूललग्नवशादर्धरात्रसमये †चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति शिल्पिनः पौरांश्च गृहीतार्थान् कृत्वा तस्मिन्नेव क्षणे पर्वतेश्वरभ्रातरं वैरोधकमेकासने चन्द्रगुप्तेन सहोपाविश्य कृतः पृथ्वीराज्यविभागः ।

**राक्षसः** । किमतिसृष्टं पर्वतेश्वरभ्रात्रे वैरोधकाय पूर्वप्रतिश्रुतं राज्यार्धम् ।

**विराधगुप्तः** । अथ किम् ।

**राक्षसः** । स्वगतम् । नियतमतिधूर्तेन तस्यापि कमप्युपांशुवधमाकल्य्य पर्वतेश्वरविनाशेन जनितस्यायशसः परिहारार्थमेषा लोकप्रसिद्धिरुपर[3]चितौ । प्रकाशम् । ततस्ततः ।

**विराधगुप्तः** । ततः ¶प्रथममेव प्रकाशिते चन्द्रगुप्तस्यार्धरात्रे नन्दभवनप्रवेशे कृताभिषेके विमलमुक्तागुणपरिक्षेपोपरचितपट्टमयप्रावरणप्रच्छादितशरीरे मणिमयमुकुटनियमितरुचिरमौलौ सुरभिकुसुमवैकक्षिकावभासितविपुलवक्षःस्थले परिचितदर्शनैरप्यनभिज्ञायमानाकृतौ चाणक्यहतका-

---

१ पूर्व° H (N L). २ दाक्ष्यस्यानुरूपं फलं in all but H(P M). ३ उपरचिता MH, उपचिता T.

* Omit अर्धरात्रसमये † Omit चन्द्रगुप्तस्य.........क्षणे

¶ Omit प्रथममेव......प्रवेशे

देशाच्चन्द्रगुप्तोपवाह्यां चन्द्रलेखां नाम गजवशामारुह्य चन्द्रगुप्तानुयायिना राजलोकेनानुगम्यमाने देवस्य नन्दस्य भवनं प्रविशति वैरोधके युष्मत्प्रयुक्तेन सूत्रधारेण दारुवर्मणा चन्द्रगुप्तोऽयमिति मत्वा तस्योपरि पातनाय सज्जीकृतं यन्त्रतोरणम् । अत्रान्तरे बहिर्निगृहीतवाहनेषु चन्द्रगुप्तानुयायिषु युष्मत्प्रयुक्तेन चन्द्रगुप्तनिपादिना *बर्बरकेण कनकदण्डिकान्तर्निहितामसिपुत्रिकामाक्रष्टुकामेनावलम्बिता करेण कनकशृङ्खलालम्बिनी कनकदण्डिका ।

**राक्षसः** । स्वगतम् । उभयोरप्यस्थाने यत्नः ।

**विराधगुप्तः** । अथ जघनाभिघातमुत्प्रेक्षमाणा गजवधूरतिजवनतया गत्यन्तरमारूढवती । ततः प्रथमगत्यनुरोधप्रत्याकलितमुक्तेन प्रभ्रष्टलक्ष्यं पतता यन्त्रतोरणेनाकृष्टकृपाणीव्यग्रपाणिरनासादयन्नेव चन्द्रगुप्ताशया वैरोधकं हतस्तपस्वी बर्बरकः । ततो दारुवर्मणा यन्त्रतोरणनिपातनादात्मवधमाकलय्य पूर्वमेवोत्तुङ्गतोरणस्थलमारूढेन यन्त्रघट्टनबीजं लोहकीलमादाय हस्तिनीगत एव हतो वैरोधकः ।

**राक्षसः** । कष्टमनर्थद्वयमापतितम् । न हतश्चन्द्रगुप्तो हतौ वैरोधकबर्बरकौ दैवेन । अथ सूत्रधारो दारुवर्मा कथम् ।

**विराधगुप्तः** । वैरोधकपुरःसरेण पदातिलोकेनैष लोष्टघातं हतः ।

**राक्षसः** । सास्रम् । अहो वत्सलेन सुहृदा दारुवर्मणा वियुक्ताः स्मः । अथ तेन भिषजाभयदत्तेन किमनुष्ठितम् ।

**विराधगुप्तः** । सर्वमनुष्ठितम् ।

**राक्षसः** । सहर्षम् । अपि हतश्चन्द्रगुप्तः ।

**विराधगुप्तः** । दैवान्न हतः ।

**राक्षसः** । सविषादम् । तत् किमिति कथयसि सर्वमनुष्ठितमिति ।

**विराधगुप्तः** । कल्पितमनेन योगचूर्णमिश्रितमौषधं चन्द्रगुप्ताय । तत् प्रत्यक्षीकुर्वता चाणक्येन कनकभाजने वर्णान्तरमुपलभ्याभिहितश्चन्द्रगुप्तः । वृषल सविषमिदमौषधम् । न पातव्यमिति ।

---

१ त्रय॰ H(M). २ परितुष्टः कथ॰ M H. ३ विष M ४ पानक...न्तरगतमुप॰ H(BC).

* Read बर्बरकेणान्तर्नि॰.

**राक्षसः** शठः खल्वसौ बटुः । अथ स वैद्यः कथम् ।

**विराधगुप्तः** । तदेवौषधं पायित उपरतः ।

**राक्षसः** । सविषादम् । अहो महान् विज्ञानराशिरुपरतः । अथ शयनाधिकृतस्य प्रमोदकस्य किं वृत्तम् ।

**विराधगुप्तः** । यदितरेषाम् ।

**राक्षसः** । सोद्वेगम् । कथमिव ।

**विराधगुप्तः** । स खलु मूर्खस्तं युष्माभिरतिसृष्टमर्थराशिं महता व्ययेनोपभोक्तुमारब्धः । ततः कुतोऽयं भूयान् धनागम इति पृच्छ्यमानो यदा वाक्यभेदान् बहूनगमत् तदा चाणक्येन विचित्रेण वधेन व्यापादितः ।

**राक्षसः** । सोद्वेगम् । कथमत्रापि दैवेनोपहता वयम् । अथ शायितस्य चन्द्रगुप्तस्य शरीरे प्रहर्तुमस्मत्प्रयुक्तानां नरपतिशयनगृहस्यान्तर्भित्ति सुरङ्गामेत्य निवसतां बीभत्सकादीनां को वृत्तान्तः ।

**विराधगुप्तः** । दारुणः ।

**राक्षसः** । सावेगम् । न खलु विदितास्ते तत्र निवसन्तः ।

**विराधगुप्तः** । अथ किम् । प्राक् चन्द्रगुप्तप्रवेशात् प्रविष्टमात्रेणैव दुरात्मना चाणक्येन शयनगृहं निपुणमवलोकयता कस्माच्चिद्भित्तिच्छिद्राद् गृहीतभक्तावयवां निष्क्रामन्तीं पिपीलिकापङ्क्तिमालोक्य पुरुषगर्भमेतद् गृहमिति* गृहीतार्थेन दाहितं तच्छयनगृहम् । तस्मिन् दह्यमाने धूमावरुद्धदृष्टयः प्रथमपिहितमनधिगम्य द्वारं सर्व एव बीभत्सकादयो ज्वलनमुपगताः ।

**राक्षसः** । सास्रम् । सखे पश्य दैवसंपदं दुरात्मनश्चन्द्रगुप्तस्य ।

> **कन्या तस्य वधाय या विषमयी गूढं प्रयुक्ता मया**
> **दैवात् पर्वतकस्तया विनिहतो यस्तस्य राज्यार्धहृत् ।**
> **ये शस्त्रेषु रसेषु च प्रणिहितास्तैरेव ते घातिता**
> **मौर्यस्यैव फलन्ति हन्त विविधश्रेयांसि मन्नीतयः ॥१६॥**

**विराधगुप्तः** । †अमात्य तथापि प्रारब्धमपरित्याज्यमेव । पश्यत्वमात्यः ।

> **प्रारभ्यते न खलु विघ्नभयेन नीचैः**
> **प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।**

---

* Omit गृहम् । †Omit अमात्य-

विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमगुणा[1] न परित्यजन्ति[2] ॥१७॥

**राक्षसः** । प्रारब्धमपरित्याज्यमेवेति प्रत्यक्षं भवतः । ततस्ततः ।

**विराधगुप्तः** । ततः प्रभृति चन्द्रगुप्तशरीरे सहस्रगुणमप्रमत्तश्चाणक्य एभ्य एतादृशं भवतीत्यन्विष्य निगृहीतवान् कुसुमपुरनिवासिनो युष्मदीयानाप्तपुरुषान् ।

**राक्षसः** । सावेगम् । अथ के के निगृहीताः ।

**विराधगुप्तः** । प्रथमं तावत् क्षपणको जीवसिद्धिः सनिकारं नगरान्निर्वासितः ।

**राक्षसः** । स्वगतम् । एतत् तावत् सह्यम् । न निष्परिग्रहं स्थानभ्रंशः पीडयति । प्रकाशम् । वयस्य कमपराधमुद्दिश्य निर्वासितः ।

**विराधगुप्तः** । एष राक्षसप्रयुक्तो विषकन्यया पर्वतेश्वरं व्यापादितवानिति ।

**राक्षसः** । स्वगतम् । साधु कौटिल्य साधु । स्वस्मिन्

परिहृतमयशः पातितमस्मासु च घातितोऽर्धराज्यहरः ।
एकमपि नीतिबीजं बहुफलतामेति यस्य तव ॥ १८ ॥

प्रकाशम् । ततस्ततः ।

**विराधगुप्तः** । ततश्चन्द्रगुप्तशरीरमभिद्रोग्धुमनेन व्यापारिता दारुवर्मादय इति नगरे प्रख्याप्य शकटदासः शूलमारोपितः ।

**राक्षसः** । सास्रम् । हा सखे शकटदास । अयुक्तस्तवायमीदृशो[3] मृत्युः । अथ वा स्वाम्यर्थमुपरतो न शोच्यस्त्वम् । वयमेव शोच्या ये नन्दकुलविनाशेऽपि जीवितुमिच्छामः ।

**विराधगुप्तः** । नैवम् । स्वाम्यर्थ एव साधयितव्य * इति[4] ।

---

१ गुणास्त्वमिवोद्वहन्ति M II. २ After this all but H (M N Bc) insert अपि च ।

किं शेषस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत् ।
किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः ॥
किं त्वङ्गीकृतमुत्सृजन् कृपणवच्छ्लाघ्यो जनो लज्जते ।
निर्वाहः प्रतिपन्नवस्तुषु सतामेकं हि गोत्रव्रतम् ॥

३ अयुक्तरूप° T. ४ इति प्रयतसे T

* Read इह

**राक्षसः ।** [1]अस्माभिरमुमेवार्थमालम्ब्य[2] न जिजीविषाम् ।
परलोकगतो देवः कृतघ्नैर्नानुगम्यते ॥ २० ॥

**विराधगुप्तः[3] ।** अमात्य नैतदेवम् ।

युष्माभिरमुमेवार्थमालम्ब्य न जिजीविषाम् ।
परलोकगतो देवः कृतज्ञैर्नानुगम्यते ॥ २१ ॥

**राक्षसः ।** सखे कथ्यतामपरस्यापि सुहृद्व्यसनस्य श्रवणे सज्जोऽस्मि ।

**विराधगुप्तः ।** एतदुपलभ्य [4]चन्दनदासेनापवाहितममात्यकलत्रम् ।

**राक्षसः ।** क्रूरस्य चाणक्यबटोर्विरुद्धमयुक्तमनुष्ठितं तेन ।

**विराधगुप्तः ।** नन्वयुक्ततरः सुहृद्द्रोहः ।

**राक्षसः ।** ततस्ततः ।

**विराधगुप्तः ।** ततो याच्यमानेनापि यदा न समर्पितमनेनामात्यकलत्रं तदातिकुपितेन चाणक्यबटुना—

**राक्षसः ।** सावेगम । न खलु व्यापादितः ।

**विराधगुप्तः ।** न हि । गृहीतसारः सपुत्रकलत्रः संयम्य बन्धनागारे निक्षिप्तः ।

**राक्षसः ।** तत् किं परितुष्टः कथयस्यपवाहितं राक्षसकलत्रमिति । ननु वक्तव्यं संयमितः सपुत्रकलत्रो राक्षस इति ।

प्रविश्य पटाक्षपेण **पुरुषः ।** जेदु अमच्चो । एसो खु सअडदासो पडिहारभूमिं उवट्ठिदो ॥ जयत्वमात्यः । एष खलु शकटदासः प्रतीहारभूमिमुपस्थितः ।

**राक्षसः ।** अपि सत्यम् ।

**पुरुषः ।** अमच्चपादोवजीविणो ण अलिअं मन्तिदुं जाणन्ति ॥ अमात्यपादोपजीविनो नालीकं मन्त्रयितुं जानन्ति ।

**राक्षसः ।** सखे विराधगुप्त कथमेतत् ।

**विराधगुप्तः ।** रक्षति भवितव्यता ।

**राक्षसः ।** प्रियंवदक यद्येवं तत् किं चिरयसि । क्षिप्रं प्रवेश्य समाश्वासय माम् ।

**पुरुषः ।** जं अमच्चो आणवेदि । निष्क्रान्तः ॥ यदमात्य आज्ञापयति ।

---

१ अस्माकम् M. २ अवलम्ब्य जिजीविषा । M., अवलम्ब्य जिजीविषाम् H. ३ The speech is omitted T. ४ उपरूढसाध्वसेन M, सौहार्देन H added after चन्दन'

ततः प्रविशति सिद्धार्थकेनानुगम्यमानः शकटदासः ।

**शकटदासः** । स्वगतम् ।

**दृष्ट्वा मौर्यमिव प्रतिष्ठितपदं शूलं धरित्र्यास्तले**
**तल्लक्ष्मीमिव [1]चेतनाप्रमथनीमूढ्वा[2] च वध्यस्रजम् ।**
**श्रुत्वा स्वाम्यपरोपरोद्धविषमानाघाततूर्यस्वनान्**
**न ध्वस्तं प्रथमाभिघातकठिनं मन्ये मदीयं मनः ॥ २२ ॥**

विलोक्य सहर्षम् । अयममात्यराक्षसस्तिष्ठति य एष

**अक्षीणभक्तिः क्षीणेऽपि नन्दे स्वाम्यर्थमुद्वहन् ।**
**पृथिव्यां स्वामिभक्तानां प्रमाणे परमे स्थितः ॥२३॥**

उपसृत्य । जयत्वमात्यः ।

**राक्षसः** । विलोक्य सहर्षम् । सखे शकटदास दिष्ट्या [3]कौटिल्यगोचरगतोऽपि त्वं दृष्टोऽसि । तत् परिष्वजस्व माम् ।

शकटदासस्तथा करोति ।

**राक्षसः** । चिरं परिष्वज्य । इदमासनमास्यताम् ।

**शकटदासः** । यदाज्ञापयत्यमात्यः । इत्युपविष्टः ।

**राक्षसः** । सखे शकटदास कोऽस्य मे हृदयानन्दस्य हेतुः ।

**शकटदासः** । सिद्धार्थकं निर्दिश्य । अनेन प्रियसुहृदा सिद्धार्थकेन घातकान् विद्राव्य वध्यस्थानादपहृतोऽस्मि ।

**राक्षसः** । सहर्षम् । भद्र सिद्धार्थक काममपर्याप्तमिदमस्य प्रियस्य । तथापि गृह्यताम् । इति स्वगात्रादवतार्य भूषणानि प्रयच्छति ।

**सिद्धार्थकः** । गृहीत्वा पादयोर्निपत्य । अमच्च एत्थ मे पढमपविट्ठस्स णत्थि कोवि परिचिदो जत्थ एदं अमच्चस्स पसादं णिक्खिविअ णिव्वुदो भविस्सं । ता इच्छामि अहं इमाए मुद्दाए मुद्दिअ अमच्चस्स भण्डाआरे ठाविदुं । जदा मे पओअणं भविस्सदि तदा गेह्लिस्सं ॥ अमात्य अत्र मे प्रथमप्रविष्टस्य नास्ति कोऽपि परिचितो यत्रैतममात्यस्य प्रसादं निक्षिप्य निर्वृतो भविष्यामि । तस्मादिच्छाम्यहमनया मुद्रया मुद्रयित्वामात्यस्यैव भाण्डागारे स्थापयितुम् । यदा मे प्रयोजनं भविष्यति तदा ग्रहीष्यामि ।

---

१ चेतसः H. २ उन्मुच्य वध्य° M, मूर्धावबद्ध T. ३ कौटिल्य...गतोऽपि omitted H. ४ स्वगतम् । अअं खु अज्जोवदेसो । होदु । तह करिस्सं । प्रकाशम् ॥ अयं खल्वार्योपदेशः । भवतु । तथा करिष्यामि । added before this T H. स्वगतम् । एवं खु अज्जोवदेसेण करिस्सं । प्रकाशम् ॥ एवं खल्वार्योपदेशेन करिष्यामि । M.

**राक्षसः** । भवतु । को दोषः । शकटदास एवं क्रियताम् ।

**शकटदासः** । यदाज्ञापयत्यमात्यः । मुद्रां विलोक्य जनान्तिकम् । अमात्य भवन्नामाङ्कितेयं मुद्रा ।

**राक्षसः** । विलोक्यात्मगतम् । सत्यम् । नगरान्निष्क्रामतो मम हस्ताद् ब्राह्मण्योत्कण्ठाविनोदार्थं गृहीता । कथमस्य हस्तमुपागता । प्रकाशम् । भद्र सिद्धार्थक कुतस्त्वयेयमधिगता ।

**सिद्धार्थकः** अमच्च अत्थि कुसुमपुरे मणिआरसेट्ठी चन्दणदासो णाम । तस्स गेहदुआरे पाडिदा मए उवलद्धा ॥ अमात्य अस्ति कुसुमपुरे मणिकारश्रेष्ठी चन्दनदासो नाम । तस्य गेहद्वारपरिसरे पतिता मयोपलब्धा ।

**राक्षसः** । युज्यते ।

**सिद्धार्थकः** । अमच्च किं एत्थ जुज्जदि ॥ अमात्य किमत्र युज्यते ।

**राक्षसः** । महाधनानां गृहद्वारि पतितस्यैवंविधस्योपलब्धिः ।

**शकटदासः** । सखे सिद्धार्थक अमात्यनामाङ्कितेयं मुद्रा । तदितो बहुतरेणार्थेन भवन्तममात्यस्तोषयिष्यति । दीयतामेषा ।

**सिद्धार्थकः** । अज्ज णं एसो मे पसादो जं अमच्चो इमाए मुद्दाए परिग्गहं करेदि । इति मुद्रामर्पयति ॥ आर्य नन्वेष मे प्रसादो यदमात्योऽस्या मुद्रायाः परिग्रहं करोति ।

**राक्षसः** । सखे शकटदास अनयैव मुद्रया स्वाधिकारे वर्तितव्यं भवता ।

**शकटदासः** । यदाज्ञापयत्यमात्यः ।

**सिद्धार्थकः** । अमच्च विण्णवणीअं किं वि अत्थि ॥ अमात्य विज्ञापनीयं किमप्यस्ति ।

**राक्षसः** । भद्र ब्रूहि विश्रब्धम् ।

**सिद्धार्थकः** । जाणादि य्येव अमच्चो जह चाणक्कबडुअस्स विप्पिअं कदुअ णत्थि मे पुणो पाडलिउत्ते पवेसो । ता इच्छामि अहं अमच्चचरणे सुस्सूसिदुं ॥ जानात्येवामात्यो यथा चाणक्यबटुकस्य विप्रियं कृत्वा नास्ति मे पुनः पाटलिपुत्रे प्रवेशः । तस्मादिच्छाम्यहममात्यचरणावेव शुश्रूषितुम् ।

१ परिओसो MT.

**राक्षसः** । भद्र प्रियं नः । त्वदभिप्रायापरिज्ञानान्तरितोऽयमस्मदनुनयः । तदेव क्रियताम् ।

**सिद्धार्थकः** । सहर्षम् । अणुगिहिदोह्मि ॥ अनुगृहीतोऽस्मि ।

**राक्षसः** । सखे शकटदास विश्रामय सिद्धार्थकम् ।

**शकटदासः** । यदाज्ञापयत्यमात्यः । सिद्धार्थकेन सह निष्क्रान्तः ।

**राक्षसः** । सखे विराधगुप्त वर्णय वृत्तशेषम् । अपि क्षमन्तेऽस्मदुपजापं *चन्द्रगुप्तप्रकृतयः ।

**विराधगुप्तः** । बाढम् । क्षमन्ते । ननु[1] प्रकाशमवगम्यते—

**राक्षसः** । सखे किं तत्र [2]प्रकाशम् ।

**विराधगुप्तः** । §इदं तत्र प्रकाशम् । मलयकेतोरपक्रमणात्[3] कुपितश्चन्द्रगुप्तश्चाणक्यस्योपरीति । चाणक्योऽपि जितकाशितया तैस्तैराज्ञाभङ्गैश्चन्द्रगुप्तस्य चेतःपीडामुपचिनोति । इति ममाप्यनुभवः ।

**राक्षसः** । सहर्षम् । सखे विराधगुप्त गच्छ त्वमनेनैवाहितुण्डिकच्छद्मना पुनः कुसुमपुरम् । तत्र मे सुहृद् वैतालिकव्यञ्जनः †स्तनकलशो नाम प्रतिवसति । स त्वया मद्वचनाद्वाच्यः । चाणक्येन क्रियमाणेष्वाज्ञाभङ्गेषु चन्द्रगुप्तस्त्वया समुत्तेजनसमर्थैः श्लोकैरुपश्लोकयितव्यः । कार्यं चातिनिभृतं करभकहस्तेन संदेष्टव्यमिति ।

**विराधगुप्तः** । यदाज्ञापयत्यमात्यः । निष्क्रान्तः ।

प्रविश्य **पुरुषः** । जेदु अमच्चो । अमच्च सअडदासो विण्णवेदि । एदे खु तिण्णि अलंकारविसेसा विक्कीअन्दि । ता ‡ पच्चक्खीकरेदु अमच्चो त्ति ॥ जयत्वमात्यः । अमात्य शकटदासो विज्ञपयति । एते खलु त्रयोऽलंकारविशेषा विक्रीयन्ते । तत् प्रत्यक्षीकरोत्वमात्य इति ।

**राक्षसः** । विलोक्यात्मगतम् । महार्हाण्याभरणानि । प्रकाशम् । भद्र उच्यतां शकटदासः । परितोष्य विक्रेतारं गृह्यन्तामिति ।

**पुरुषः** । जं अमच्चो आणवेदि । निष्क्रान्तः ॥ यदमात्य आज्ञापयति ।

---

१ (ननु) यथाप्रधान ( vl. प्रकाश) मनुगच्छन्त्येव । M T H. २ कारणम् M H.
३ °क्रमणात् प्रभृति in all but H (K).

*Omit चन्द्रगुप्त. § Omit इदं तत्र प्रकाशम् । †Read स्तवकलशो. ‡Read ते.

**राक्षसः ।** यावदहमपि कुसुमपुराय करभकं प्रेषयामि । उत्थाय । अपि नाम दुरात्मनश्चाणक्याच्चन्द्रगुप्तो भिद्येत । अथ वा[1]

**मौर्यस्तेजसि सर्वभूतलभुजामाज्ञापको वर्तते**
**चाणक्योऽपि मदाश्रयादयमभूद्राजेति जातस्मयः ।**
**राज्यप्राप्तिकृतार्थमेकमपरं तीर्णप्रतिज्ञार्णवं**
**सौहार्दात् कृतकृत्यतैव नियतं लब्धान्तरा भेत्स्यति ॥२४॥**

निष्क्रान्तः ।

इति राक्षसविचारो नाम द्वितीयोऽङ्कः ।

१ सिद्धमेव नः समीहितं पश्यामि । कुतः। added after this M T.

कृतककलहो नाम

तृतीयोऽङ्कः ।

ततः प्रविशति कञ्चुकी ।

**कञ्चुकी ।**

**रूपादीन् विषयान् निरूप्य करणैर्यैरात्मलाभस्त्वया**
**लब्धस्तेष्वपि चक्षुरादिषु हताः स्वार्थावबोधक्रियाः ।**
**अङ्गानि प्रसभं त्यजन्ति पटुतामाज्ञाविधेयानि [1]ते**
**न्यस्तं मूर्ध्नि पदं [2]तथैव जरया तृष्णे मुधा [3]ताम्यसि ॥१॥**

परिक्रम्याकाशे । भो भोः सुगाङ्गप्रासादाधिकृताः सुगृहीतनामा देवश्चन्द्रगुप्तः समाज्ञापयति । प्रवृत्तकौमुदीमहोत्सवं कुसुमपुरमवलोकयितु-
३मिच्छामि । तत्संस्क्रियन्तां सुगाङ्गप्रासादस्य भूमय इति । पुनराकाशे । किं ब्रूथ । आर्य किमविदित एवायं देवस्य कौमुदीमहोत्सवप्रतिषेध इति । आः दैवोपहताः किमनेन वः प्राणहरेण [5]कथोपोद्धातेन । शीघ्र-
६मिदानीम्

**आलिङ्गन्तु गृहीतधूपसुरभीः स्तम्भान् पिनद्धस्रजः**
**संपूर्णेन्दुमयूखसंहतिरुचां सच्चामराणां श्रियः ।**
**सिंहाङ्कासनधारणाच्च सुचिरं संजातमूर्छामिव**
**क्षिप्रं चन्दनवारिणा सकुसुमः सेकोऽनुगृह्णातु गाम् ॥२॥**

पुनराकाशे । किं ब्रूथ । आर्य इदमनुष्ठीयते देवस्य शासनमिति । भद्रास्त्वरध्वम् । अयमागतो देवश्चन्द्रगुप्तः । य एष

**सुविश्रब्धैरङ्गैः पथिषु विषमेष्वप्यचलता**
**चिरं धुर्येणोढा गुरुरपि भुवो यास्य गुरुणा ।**
**धुरं तामेवोच्चैर्नववयसि वोढुं व्यवसितो**
**मनस्वी दम्यत्वात् स्खलति न न दुःखं च वहति ॥३॥**

नेपथ्ये **प्रतीहारी ।** इदो इदो देवो ॥ इत इतो देवः ।

ततः प्रविशति राजा प्रतीहारी च ।

**राजा ।** स्वगतम् । राज्यं हि नाम राजधर्मानुवृत्तिपरस्य नृपतेर्महदप्रीतिस्थानम् । कुतः ।

---

१ मे M H २ तवैव in all but H (K). ३ मायासि M. ४ प्रासादस्योपरिभू in all but H (K). ५ कथोद्घातेन M H.

परार्थानुष्ठाने [1]रहयति नृपं स्वार्थपरता
परित्यक्तस्वार्थो नियतमयथार्थः क्षितिपतिः ।
परार्थश्चेत् स्वार्थादभिमततरो हन्त परवान्
परायत्तः प्रीतेः कथमिव रसं वेत्ति पुरुषः ॥४॥

अपि च दुराराध्या [2]लक्ष्मीरात्मवद्भिरपि राजभिः ।

तीक्ष्णादुद्विजते मृदौ परिभवत्रासान्न संतिष्ठते
मूर्खान् द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि ।
शूरेभ्योऽभ्यधिकं बिभेत्युपहसत्येकान्तभीरूनपि
श्रीर्लब्धप्रसरेव वेशवनिता दुःखोपचर्या भृशम् ॥ ५ ॥

अन्यच्च [3]कृतककलहं कृत्वा स्वतन्त्रेण त्वया कंचित् कालं व्यवहर्तव्यमित्यार्यादेशः । स च कथमपि मया पातकमिवाभ्युपगतः । अथ वा शश्वदार्योपदेशसंस्क्रियमाणमतयः सर्वदैव स्वतन्त्रा वयम् । कुतः ।

इह विरचयन् साध्वीं शिष्यः क्रियां न निवार्यते
त्यजति तु यदा मार्गं मोहात् तदा गुरुरङ्कुशः ।
विनयरुचयस्तस्मात् सन्तः सदैव निरङ्कुशाः
[4]परतरमतः स्वातन्त्र्येभ्यो वयं हि पराङ्मुखाः ॥ ६ ॥

प्रकाशम् । आर्य वैहीनरे सुगाङ्गमार्गमादेशय ।

**कञ्चुकी** । इत इतो देवः । परिक्रम्य । अयं सुगाङ्गप्रासादः । शनैरारोहतु देवः ।

**राजा** । नाट्येनारुह्य दिशोऽवलोक्य । अहो शरत्समयशोभां बिभ्रतीनां दिशामतिरमणीयता । संप्रति हि

शनैः [5]श्यानीभूताः* सितजलधरच्छेदपुलिनाः†
समन्तादाकीर्णाः कलविरुतिभिः सारसकुलैः ।
चिताश्चित्राकारैर्निशि विकचनक्षत्रकुमुदै-
र्नभस्तः स्यन्दन्ते सरित इव दीर्घा दश दिशः ॥७॥

अपि च

१ जडयाति M. श्लथयाति H. २ राजलक्ष्मीः in all but H (MK). ३ कृतककलहं कृत्वा omitted in H (M) ४ पदमपि यतः स्वातन्त्र्येभ्यो न यान्ति पराङ्मुखाः H. ५ शान्ता भूताः M, शान्ताकूताः H

* Read श्येतीभूताः † Read °पुलिनैः

अपामुद्वृत्तानां निजमुपदिशन्त्या स्थितिपथं[1]
दधत्या शालीनामवनतिमुदारे सति फले ।
मयूराणामुग्रं विषमिव हरन्त्या मदमहो
कृतः कृत्स्नस्यायं विनय इव लोकस्य शरदा ॥८॥

इमामपि

भर्तुस्तथा कलुषितां बहुवल्लभस्य
मार्गे कथंचिदवतार्य तनूभवन्तीम् ।
सर्वात्मना रतिकथाचतुरेव दूती
गङ्गां शरन्नयति सिन्धुपतिं प्रसन्नाम् ॥९॥

समन्तादवलोक्य । अये कथमप्रवृत्तकौमुदीमहोत्सवं कुसुमपुरम् । आर्य वैहीनरे अथास्मद्वचनादाघोषितः कुसुमपुरे कौमुदीमहोत्सवः ।

**कञ्चुकी** । अथ किम् ।

**राजा** । तत् किं न गृहीतमस्मद्वचनं पौरैः ।

**कञ्चुकी** । कर्णौ पिधाय । शान्तं पापम् । पृथिव्यामस्खलितपूर्वं देवस्य शासनं कथं पौरेषु स्खलिष्यति ।

**राजा** । तत् कथमप्रवृत्तकौमुदीमहोत्सवमद्यापि कुसुमपुरम् ।

धूर्तैरन्वीयमाना [2]रतिचतुरकथाकोविदैर्वेशनार्यो
नालंकुर्वन्ति रथ्याः पृथुजघनभराक्रान्तिमन्दैः प्रयातैः
अन्योन्यं स्पर्धमाना न च गृहविभवैः स्वामिनो मुक्तशङ्काः
साकं स्त्रीभिर्भजन्ते विधिमभिलषितं पार्वणं पौरमुख्याः ॥१०॥

**कञ्चुकी** । देव एवमेतत् ।

**राजा** । किमेतत् ।

**कञ्चुकी** । एवमिदम् ।

**राजा** । स्फुटं कथय ।

**कञ्चुकी** । प्रतिषिद्धः कौमुदीमहोत्सवः ।

**राजा** । सक्रोधम् । आः केन ।

**कञ्चुकी** । देव नातः परं विज्ञापयितुं शक्यम् ।

**राजा** । न खल्वार्यचाणक्येनापहृतः प्रेक्षकाणामतिशयरमणीयश्चक्षुषो विषयः ।

१ पदं TH. २ स्फुटचतुर in all but (B).

**कञ्चुकी** । देव कोऽन्यो जीवितुकामो देवस्य शासनमुल्लङ्घयिष्यति

**राजा** । शोणोत्तरे उपवेष्टुमिच्छामि ।

**प्रतीहारी** । देव एदं सीहासणं । उवविसदु देवो ॥ देव एतत् सिंहासनम् । उपविशतु देवः ।

**राजा** । उपविश्य । आर्य वैहीनरे । आर्यचाणक्यं द्रष्टुमिच्छामि ।

**कञ्चुकी** । यदाज्ञापयति देवः । निष्क्रान्तः ।

ततः प्रविशत्यासनस्थः स्वभवनगतः कोपानुविद्धां चिन्तां नाटयंश्चाणक्यः ।

**चाणक्यः** । कथम् । स्पर्धते मया सह दुरात्मा राक्षसः ।

कृतागाः कौटिल्यो भुजग इव निर्याय नगराद्
यथा [1]नन्दं हत्वा नृपतिमकरोन्मौर्यवृषलम् ।
तथाहं मौर्येन्दोः श्रियमपहरामीति कृतधीः
प्रकर्षं[2] मद्बुद्धेरतिशयितुमेष व्यवसितः ॥ ११ ॥

प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा । राक्षस विरम्यतामस्माद्दुर्व्यवसितात् । कुतः ।

उत्सिक्तः *कुसचिवदृष्टराज्यतन्त्रो
नन्दोऽसौ न भवति चन्द्रगुप्त एषः ।
चाणक्यस्त्वमपि च नैव केवलं ते
साधर्म्यं मदनुकृते[3] प्रधानवैरम् ॥ १२ ॥

विचिन्त्य । अथ वा नातिमात्रं मया मनः खेदयितव्यम् ।

मद्भृत्यैः किल नाम पर्वतसुतो व्याप्तः [4]प्रविष्टान्तरै-
रुद्युक्ताः स्वनियोगसाधनविधौ सिद्धार्थकाद्याः स्पशाः ।
कृत्वा संप्रति कैतवेन कलहं मौर्येन्दुना राक्षसं
भेत्स्यामि स्वमतेन भेदकुशलं[5] ह्येष प्रतीपं द्विषः ॥१३॥

प्रविश्य **कञ्चुकी** । कष्टं खलु सेवा ।

भेतव्यं नृपतेस्ततः सचिवतो राज्ञस्ततो वल्लभा-
दन्येभ्यश्च भवन्ति येऽस्य भवने लब्धप्रसादा विटाः ।
दैन्यादुन्मुखदर्शनापलपनैः पिण्डार्थमायस्यतः
सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः ॥१४॥

१ नन्दान् T. २ प्रभावं M H. ३ कृतेः M T.H. ४ प्रतिष्ठा° M. प्रदिष्टा° H
५ कुशलो ह्येषः प्र° M. कुशलस्त्वेष प्र° M. कुशलो देवप्र° H

* Read सचिवविमृष्ट°

परिक्रम्यावलोक्य च । इदमार्यचाणक्यस्य गृहम् । यावत् प्रविशामि ।

प्रविश्यावलोक्य च । अहो राजाधिराजमन्त्रिणो विभूतिः ।

उपलशकलमेतद् भेदकं गोमयानां
बटुभिरुपहृतानां बर्हिषां [1]कूटमेतत् ।
शरणमपि समिद्भिः शुष्यमाणाभिरन्त[2]-
र्विनमितपटलान्तं दृश्यते जीर्णकुड्यम् ॥१५॥

तत् स्थाने खल्वस्य वृषलो देवश्चन्द्रगुप्तः । कुतः

स्तुवन्त्यश्रान्तास्याः क्षितिपतिमभूतैरपि गुणैः
प्रवाचः कार्पण्याद्यदवितथवाचोऽपि [3]पुरुषाः ।
प्रभावस्तृष्णायाः स खलु सकलः स्यादितरथा
निरीहाणामीशस्तृणमिव तिरस्कारविषयः ॥१६॥

विलोक्य सभयम् । अयमार्यचाणक्यस्तिष्ठति

यो नन्दमौर्यनृपयोः [4]परिगृह्य लोक-
मस्तोदयावतिदिशन्नविभिन्नकालम् ।
पर्यायपातितहिमोष्णमसर्वगामि
धाम्नातिशाययति धाम सहस्रधाम्नः ॥१७॥

जानुभ्यां भूमौ निपत्य । जयत्वार्यः ।

**चाणक्यः** । वैहीनरे किमागमनप्रयोजनम् ।

[?]**कञ्चुकी** । आर्य प्रणतिसंभ्रमचलितभूमिपालमौलिमणिशिखापिशङ्गितपादयुगलो देवश्चन्द्रगुप्त आर्यं शिरसा प्रणम्य विज्ञापयति । अकृतक्रियान्तरायमार्यं द्रष्टुमिच्छामीति ।

[6]**चाणक्यः** । वृषलो मां द्रष्टुमिच्छति । वैहीनरे न खलु वृषलस्य श्रवणमुपगतोऽयं मत्कृतः कौमुदीमहोत्सवप्रतिषेधः ।

**कञ्चुकी** । आर्य । अथ किम् ।

[?]**चाणक्यः** । सक्रोधम् । आः केन कथितम् ।

**कञ्चुकी** । सभयम् । प्रसीदत्वार्यः । स्वयमेव सुगाङ्गप्रासादगतेन देवेनावलोकितमप्रवृत्तकौमुदीमहोत्सवं पुरम् ।

---

१ स्तोमम् M स्तूपम् H T. २ आभि in all but H (M). ३ कृतिनः M H. ४परिभूय in all but H(M). ५ प्रतिदिशन्नवि० M.उपदिशन्नवि० H. अदिशदप्रति०T

**चाणक्यः** । ज्ञातम् । ततो भवद्भिर्मदन्तरेण प्रोत्साह्य कोपितो वृषलः । किमन्यत् ।

कञ्चुकी भय नाटयंस्तूष्णीमधोमुखस्तिष्ठति ।

**चाणक्यः** । अहो राजपरिजनस्य चाणक्योपरि प्रद्वेषपक्षपातः । अथ क्व वृषलः ।

**कञ्चुकी** । आर्य सुगाङ्गगतेन देवेनाहमार्यपादमूलं प्रेषितः ।

**चाणक्यः** । उत्थाय । सुगाङ्गमार्गमादेशय ।

**कञ्चुकी** । इत इत आर्यः । उभौ परिक्रामतः ।

**कञ्चुकी** । एष सुगाङ्गप्रासादः । शनैरारोहत्वार्यः ।

**चाणक्यः** । नाट्येनारुह्यावलोक्य च । अये सिंहासनमध्यास्ते वृषलः । साधु ।

नन्दैर्वियुक्तमनपेक्षितराजवृत्तै-[1]
रध्यासितं च वृषलेन वृषेण राज्ञाम् ।
सिंहासनं सदृशपार्थिवसंगतं च
प्रीतिं [2]त्रयस्त्रिगुणयन्ति गुणा ममैते ॥१८॥

उपसृत्य । विजयतां वृषलः ।

**राजा** । सिंहासनादुत्थाय । आर्य चन्द्रगुप्तः प्रणमति । इति पादयोः पतति ।

**चाणक्यः** । पाणौ गृहीत्वा । उत्तिष्ठ वत्स ।

आ शैलेन्द्राच्छिलान्तःस्खलितसुरनदीशीकरासारशीता-
दा तीरान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य ।
आगत्यागत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्तां
चूडारत्नांशुगर्भास्तव चरणयुगस्याङ्गुलीरन्ध्रभागाः ॥१९॥

**राजा** । आर्यप्रसादादनुभूयत एवैतद् । उपविशत्वार्यः ।

उभौ यथोचितमुपविष्टौ ।

**चाणक्यः** । वृषल किमर्थं वयमाहूताः ।

**राजा** । आर्यस्य दर्शनेनात्मानमनुग्राहयितुम् ।

**चाणक्यः** । सस्मितम् । अलमनेन प्रश्रयेण । न निष्प्रयोजनमधिकारवन्तः प्रभुभिराहूयन्ते ।

---

१ °राजैः T. २ परा प्रगुण° M T. ३ तत्प्रयोजनमभिधीयताम् । add M H

राजा । कौमुदीमहोत्सवप्रतिषेधस्य किं फलमार्यः पश्यति¶ ।

चाणक्यः । स्मितं कृत्वा । उपालब्धुं वयमाहूताः ।

राजा । नहि नहि । विज्ञापयितुम् ।

चाणक्यः । यद्येवं तर्हि विज्ञापनीयानामवश्यं शिष्येण रुचयोऽनुरोद्धव्याः ।

राजा । एवमेतत् । कः संदेहः । किंतु न कदाचिदप्यार्यस्य निष्प्रयोजना प्रवृत्तिरित्यस्ति† नः प्रश्नावकाशः ।

चाणक्यः । वृषल सम्यग् गृहीतवानसि । न प्रयोजनमन्तरा चाणक्यः स्वप्नेऽपि चेष्टते ।

राजा । अतः प्रयोजनशुश्रूषा मां मुखरयति ।

चाणक्यः । वृषल इह खल्वर्थशास्त्रकारास्त्रिविधां सिद्धिमुपवर्णयन्ति राजायत्तां सचिवायत्तामुभयायत्तां च । तत्र सचिवायत्तसिद्धेस्तव किं प्रयोजनान्वेषणेन । वयमेवात्राभियुक्ता[1] वर्तामहे ।

राजा सकोपं मुखं परावर्तयति । नेपथ्ये वैतालिकौ पठतः ।

प्रथमः ।

आकाशं [2]काशपुष्पच्छविमभिभवता भस्मना शुक्लयन्ती
शीतांशोरंशुजालैर्जलधरमलिनां क्लिश्नती कृत्तिमैभीम् ।
कापालीमुद्वहन्ती स्रजमिव धवलां कौमुदीमित्यपूर्वा
हासश्रीराजहंसा हरतु तनुरिव क्लेशमैशी शरद्वः ॥२०॥

अपि च

प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणा-
मात्मव्यापारगुर्वी जनितजललवा जृम्भितैः साङ्गभङ्गैः ।
[3]नागाङ्कं मोक्तुमिच्छोः शयनमुरुफणाचक्रवालोपधानं
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥२१॥

द्वितीयः ।

सत्त्वोत्कर्षस्य धात्रा निधय इव कृताः केऽपि कस्यापि हेतो-
र्जेतारः स्वेन धाम्ना मदसलिलमुचां नागयूथेश्वराणाम् ।
दंष्ट्राभङ्गं मृगाणामधिपतय इव व्यक्तमानावलेपा
नाज्ञाभङ्गं सहन्ते नृवर नृपतयस्त्वादृशाः सार्वभौमाः ॥२२॥

---

१ नियुक्ताः T H. २ तूल H. ३ नागाङ्कं M T.

¶ Read पश्यतीति ।

† Omit इत्यस्ति नः प्रश्नावकाशः ।

अपि च

भूषणाद्युपभोगेन प्रभुर्भवति न प्रभुः ।
परैरपरिभूताज्ञस्त्वमेव[1] प्रभुरुच्यते ॥ २३ ॥

**चाणक्यः** । स्वगतम् । प्रथमं तावद्विशिष्टदेवतास्तुतिरूपेण प्रवृत्तशरद्गुणप्रख्यापनम् । इदमपरं किमिति नावधारयामि । विचिन्त्य । आः ज्ञातम् । राक्षसस्यायं प्रयोगः । दुरात्मन् राक्षस दृश्यसे । जागर्ति खलु कौटिल्यः ।

**राजा** । आर्य वैहीनरे आभ्यां वैतालिकाभ्यां सुवर्णसहस्रं दापय ।

**कञ्चुकी** । यदाज्ञापयति देवः । परिक्रामति ।

**चाणक्यः** । वैहीनरे तिष्ठ तिष्ठ न गन्तव्यम् । कञ्चुकी सभयं राजानमवलोकयति । वृषल किमयमस्थाने महानर्थोत्सर्गः ।

**राजा** । आर्येणैवं सर्वत्र निरुद्धस्य मे बन्धनमिव राज्यं न राज्यमिव ।

**चाणक्यः** । स्वयमनभियुक्तानां राज्ञामेते दोषाः संभवन्ति । तद्यदि न सहसे स्वयमभियुज्यस्व ।

**राजा** । एते वयं स्वकर्मण्यभियुज्यामहे ।

**चाणक्यः** । प्रियं नः ।

**राजा** । यद्येवं तर्हि कौमुदीमहोत्सवप्रतिषेधस्य तावत्प्रयोजनं श्रोतुमिच्छामः ।

**चाणक्यः** । वृषल कौमुदीमहोत्सवानुष्ठानस्य किं प्रयोजनमित्यहमपि श्रोतुमिच्छामि ।

**राजा** । प्रथमं तावन्मदाज्ञाव्याघातः ।

**चाणक्यः** । वृषल ममापि त्वदाज्ञाव्याघात एव कौमुदीमहोत्सवप्रतिषेधस्य प्रथमं प्रयोजनम् । कुतः ।

अम्भोधीनां तमालप्रभवकिसलयश्यामवेलावनाना-
मापारेभ्यश्चतुर्णां चटुलतिमिकुलक्षोभितान्तर्जलानाम् ।
मालेवाज्ञा *सपुष्पा तव नृप रुह्यते या शिरोभिः
सा मय्येव स्खलन्ती प्रथयति विनयालंकृतं ते प्रभुत्वम् ॥२४॥

अथ त्वमपरं प्रयोजनं श्रोतुमिच्छसि तदपि कथयामि ।

---

१ त्वमिव in all but H (M). २ आशीर्वचनम् added M T H. ३ निरुद्धचेष्टाप्रसरस्य M T H. ४ (एते) वयम् (अपि) स्वकर्मण्यभियुज्यामहे added M T H. ५ राजा । अथापरमपि प्रयोजनं यत् तच्छ्रोतुमिच्छामि ॥ चाण० । तदपि कथयामि । M H. * Read सुपुष्पा.

राजा । कथ्यताम् ।

चाणक्यः । शोणोत्तरे मद्वचनात् कायस्थमचलं ब्रूहि यत् भद्रभटप्रभृतीनामितोऽपरागादपक्रम्य मलयकेतुमाश्रितानां लेखपत्रं[1] दीयताम् ।

प्रतीहारी । जं अज्जो आणवेदि । निष्क्रम्य पुनः प्रविश्य । अज्ज इमं तं पत्तअं ॥ यदार्य आज्ञापयति । आर्य इदं तत् पत्रकम् ।

चाणक्यः । गृहीत्वा । वृषल श्रूयताम् ।

राजा । दत्तावधानोऽस्मि ।

चाणक्यः । वाचयति । सुगृहीतनामधेयस्य देवस्य चन्द्रगुप्तस्य सहोत्थायिनां प्रधानपुरुषाणामितोऽपक्रम्य* वध्यमलयकेतुमाश्रितानां †परिमाणलेखपत्रम्[2] । ¶प्रथमं तावद् गजाध्यक्षो भद्रभटोऽश्वाध्यक्षः पुरुदत्तो महाप्रतीहारस्य चन्द्रसेनस्य भागिनेयो डिङ्गरातो देवस्य स्वजनगन्धी महाराजो बलगुप्तो देवस्यैव कुमारसेवको राजसेनः सेनापतेः सिंहबलस्य कनीयान् भ्राता भागुरायणो मालवराजपुत्रो रोहिताक्षः क्षत्रगणमुख्यो विजयवर्मेति[3] ।

राजा । अथैतेषामपरागहेतून् श्रोतुमिच्छामि ।

चाणक्यः । वृषल श्रूयताम् । अत्र यावेतौ हस्त्यश्वाध्यक्षौ भद्रभटपुरुदत्तौ तौ स्त्रीमद्यमृगयाशीलौ हस्त्यश्वावेक्षणेऽनभियुक्तौ मयाधिकारादवरोप्य स्वजीवनमात्रेणैव स्थापितावित्यपक्रम्य स्वेन स्वेनाधिकारेण मलयकेतुमाश्रितौ । यावेतौ डिङ्गरातबलगुप्तौ तावत्यन्तलोभाभिभूतौ त्वद्दत्तं जीवनमबहु मन्यमानौ तत्र बहु लभ्यत इत्यपक्रम्य मलयकेतुमाश्रितौ । योऽप्यसौ भवतः कुमारसेवको राजसेनः स तव प्रसादादतिप्रभूतकोशहस्त्यश्वं सहसैव महदैश्वर्यमवाप्य पुनरुच्छेदशङ्कयापक्रम्य मलयकेतुमाश्रितः । योऽयं सेनापतेः सिंहबलस्य कनीयान् भ्राता भागुरायणः सोऽपि पर्वतकेन सह समुत्पन्नसौहार्दस्तत्प्रीत्या च पिता ते चाणक्येन व्यापादित इति रहसि त्रासयित्वा मलयकेतुमपवाहितवान्

---

१ लेख्य M T H. २ आत्मगतम् । एते वयं देवस्य कार्येऽवहिताः स्म. । प्रकाशम् । added at the end M T, एतावदेतत् पत्रम् । superadded M T H. ३ इत्युत्पाद्य T H.

* Read अपरागादपक्रम्य † Omit परिमाण. ¶ Omit प्रथमं.

भवदपथ्यकारिषु चन्दनदासादिषु निगृह्यमाणेषु स्वदोषाशङ्कयापक्रम्य मलयकेतुमाश्रितः । तेनाप्यसौ मम प्राणरक्षक इति कृतज्ञतामनुवर्तमानेनात्मनोऽनन्तरममात्यपदमारोपितः । यावेतौ रोहिताक्षविजयवर्माणौ तावप्यतिमानित्वात् स्वदायादेभ्यस्त्वया दत्तं मानमसहमानौ मलयकेतुमाश्रितौ । इत्येषामपरागहेतवः ।

**राजा** । एतेषु ज्ञातापरागहेतुषु क्षिप्रं कस्मान्न प्रतिविहितमार्येण ।

**चाणक्यः** । वृषल न पारितं प्रतिविधातुम् ।

**राजा** । किमकौशलादुत प्रयोजनापेक्षया ।

**चाणक्यः** । कथमकौशलं भविष्यति । प्रयोजनापेक्षयैव ।

**राजा** । प्रयोजनमिदं श्रोतुमिच्छामि ।

**चाणक्यः** । श्रूयतामवधार्यतां च ।[1] इह खल्वपरक्तानां प्रकृतीनां द्विविधं प्रतिविधानमनुग्रहो निग्रहश्च । अनुग्रहस्तावदाक्षिप्ताधिकारयोर्भद्रभटपुरुदत्तयोः पुनरधिकारारोपणमेव । अधिकारश्च तादृशेषु व्यसनदोषेषु पुनरारोप्यमाणः सकलमेव राज्यस्य मूलं हस्त्यश्वमवसादयेत् । डिङ्गरातबलगुप्तयोरतिलुब्धयोः सकलराज्यप्रदानेनाप्यपरितुष्यतोरनुग्रहः कथं शक्यः । राजसेनभागुरायणयोस्तु धनप्राणनाशभीतयोः कुतोऽनुग्रहस्यावकाशः । रोहिताक्षविजयवर्मणोरपि दायादमानमसहमानयोरतिमानिनोः कीदृशोऽनुग्रहः प्रीतिं जनयिष्यति । इति परिहृतः पूर्वः पक्षः । उत्तरोऽपि वयमचिरादधिगतनन्दैश्वर्याः सहोत्थायिनं प्रधानपुरुषवर्गमुल्वणेन दण्डेन पीडयन्तो नन्दकुलानुरक्तानां प्रकृतीनामविश्वास्या स्याम इति परिहृतः । तदेवमुपगृहीतासत्कृत्य[2]पक्षो राक्षसोपदेशप्रवणो महीयसा म्लेच्छराजबलेन परिवृतः पितृवधामर्षितः पर्वतकपुत्रो मलयकेतुरस्मानभियोक्तुमुद्यतः । सोऽयं व्यायामकालो नोत्सवकाल इति दुर्गसंस्कारे प्रारब्धव्ये किं कौमुदीमहोत्सवेन ।

**राजा** । बहु प्रष्टव्यमत्र ।

**चाणक्यः** । विश्रब्धं पृच्छ । ममापि बह्वाख्येयमत्र[3] ।

१ After this H adds राजा । उभयमपि क्रियते । कथ्यताम् । चाण० । २ भृत्य M.H, कृत्य omitted T. ३ After this M H. add राजा । एष पृच्छामि । चाण० । अहमप्येष कथयामि ।

राजा । योऽस्य सर्वस्यानर्थस्य हेतुर्मलयकेतुः स कस्मादपक्रामन्नुपेक्षितः ।

चाणक्यः । [1]अनुपेक्षणे द्वयी गतिर्निगृह्येत वा प्रतिश्रुतं राज्यार्धं प्रतिपाद्येत वा । निग्रहे तावत् पर्वतकोऽस्माभिरेव व्यापादित इति कृतघ्नतायाः [2]स्वहस्तो दत्तः स्यात् । राज्यार्धप्रतिपादनेऽपि पर्वतक[3]विनाशे कृतघ्नतामात्रपरिहारः स्यात् । इति मलयकेतुरपक्रामन्नुपेक्षितः ।

राजा । अत्र तावदेवम् । राक्षसः पुनरिहैव वर्तमान आर्येणोपेक्षित इत्यत्र किमुत्तरमार्यस्य ।

चाणक्यः । राक्षसोऽपि स्वामिनि स्थिरानुरागत्वात् सुचिरमेकत्र वासाच्च* शीलज्ञानां नन्दानुरक्तानां प्रकृतीनामत्यन्तविश्वास्यः प्रज्ञापुरुषकाराभ्यामुपेतः सहायसंपदा युक्तः कोशवानिहैवान्तर्नगरे वर्तमानः खलु महान्तमन्तःकोपमुत्पादयेत् । दूरीकृतस्तु बाह्यकोपमुत्पादयन्नपि न दुःसाध्यो भविष्यति । इत्यपक्रामन्नुपेक्षितः ।

राजा । तत् किमर्थमिहस्थ एवोपायैर्नापक्रान्तः ।

चाणक्यः । कथमनुपक्रान्तो भविष्यति । ननूपायैरेवासौ हृदयेशायः शङ्कुरिवोद्धृत्य दूरीकृतः ।

राजा । कस्माद्विक्रम्य न गृहीतः ।

चाणक्यः । राक्षसः खल्वसौ । विक्रम्य गृह्यमाणः स्वयं वा विनश्येद्युष्मद्बलानि वा विनाशयेत् । एवं सत्युभयथापि दोषः । पश्य ।

स हि भृशमभियुक्तो यद्युपेयाद्विनाशं
ननु वृषल वियुक्तस्तादृशेनासि पुंसा ।
अथ तव बलमुख्यान् घातयेत् सापि पीडा
वनगज इव तस्मात् सोऽभ्युपायैर्विनेयः ॥ २५ ॥

राजा । न शक्नुमो वयमार्यस्य [4]वाचं वाचातिशयितुम् । सर्वथामात्यराक्षस एवात्र प्रशस्यतरः ।

---

१ मलयकेतोरपक्रमणानुपेक्षणे M. मलयकेतावनुपेक्षितापक्रमणे H. २ स्वगं हस्तो M H. ३ विनाश. (केवलं) कृतघ्नतामात्रफलं (v.l फला ) स्यात् M H T. ४ वाचा वाचं in all but H (M )

* Omit च.

[१]चाणक्यः । न भवानिति वाक्यशेषः । भो वृषल तेन किं कृतम् ।

राजा । श्रूयताम् । तेन खलु महात्मना

लब्धायां पुरि यावदिच्छमुषितं कृत्वा पदं नो गले
व्याघातो जयघोषणादिषु बलादस्मद्बलानां कृतः ।
अत्यर्थं विपुलैश्च नीतिविभवैः संमोहमापादिता
विश्वास्येष्वपि विश्वसन्ति मतयो न स्वेषु वर्ग्येषु नः ॥२६॥

चाणक्यः । विहस्य । एतत् कृतं राक्षसेन । [१]मया पुनर्ज्ञातं नन्दमिव भवन्तमुद्धृत्य भवानिव भूतले मलयकेतू राजाधिराजपदमारोपित इति ।

[३]राजा । अन्येनैवेदमनुष्ठितम् । किमत्रार्यस्य ।

चाणक्यः । अहो मत्सरिन्

आरुह्यारूढकोपस्फुरणविषमिताग्राङ्गुलीमुक्तचूडां
लोकप्रत्यक्षमुग्रां सकलरिपुकुलोत्सादद्दीर्घां प्रतिज्ञाम् ।
केनान्येनावलिप्ता *नवनवतिशतद्रव्यकोटीश्वरास्ते
नन्दाः [२]पर्यायसूनाः पशव इव हताः पश्यतो राक्षसस्य[३] ॥२७॥

राजा । नन्दकुलविद्वेषिणा दैवेन ।

चाणक्यः । दैवमविद्वांसः प्रमाणयन्ति ।

[३]राजा । विद्वांसोऽप्यविकत्थना भवन्ति ।

चाणक्यः । सकोपम् । वृषल कथं भृत्यमिव मामधिरोढुमिच्छसि ।

---

१ After this is inserted राजा । अथ किम् । H, राजा । अथ किम् । एतत् कृतममात्यराक्षसेन । M, with a further addition of चाण० । before मया पुनर्ज्ञातं० २ पर्यायभूताः M T, पर्यायशूराः H. ३ After this all but T (E) add अपि च ।

गृध्रैराबद्धचक्रं वियति विचलितैर्दीर्घनिष्कम्पपक्षै-
धूमैर्ध्वस्तार्कभासां सघनमिव दिशां मण्डलं दर्शयन्तः ।
नन्दाना नन्दयन्तः पितृवननिलयान् प्राणिनः पश्य चैत्या-
निर्वान्त्यद्यापि नैते स्रुतबहलवसावाहिनो हव्यवाहाः ॥ २८ ॥

and M T. superadd राजा । अन्येनैवेदमनुष्ठितम् ॥ चाण० । आः केन ।

४ इदमनुष्ठितम् added M H.

* Read नव नवनवतिद्रव्य

शिखां मोक्तुं [1]बद्धामपि पुनरयं धावति करः
प्रतिज्ञामारोढुं पुनरपि चलत्येष चरणः ।
प्रणाशान्नन्दानां प्रशममुपयातं त्वमधुना
परीतः कालेन ज्वलयसि पुनः क्रोधदहनम् ॥ २८ ॥

राजा । आत्मगतम् । कथं सत्यमेवार्यः कुपितः । तथा हि

संरम्भस्पन्दिपक्ष्मक्षरदमलजलक्षालनक्षामयापि
भ्रूभङ्गोद्भूतधूमं ज्वलितमिव पुनः पिङ्गया नेत्रभासा ।
मन्ये रुद्रस्य रौद्रं रसमभिनयतस्ताण्डवे संस्मरन्त्या
संजातोदग्रकम्पं कथमपि धरया धारितः पादघातः ॥२९॥

चाणक्यः । कृतककोपं संहृत्य । वृषल अलमुत्तरोत्तरेण । यद्यस्मत्तो गरीयान् राक्षसोऽवगम्यते तदिदं शस्त्रं तस्मै दीयताम् । शस्त्रमुत्सृज्योत्थाय च प्रत्यक्षवदाकाशे लक्ष्य बद्ध्वा स्वगतम् । राक्षस *एष भवतः [2]कौटिल्यबुद्धिविजिगीषोर्बुद्धेः प्रकर्षः ।

चाणक्यतश्चलितभक्तिमहं सुखेन
जेष्यामि मौर्यमिति संप्रति यः प्रयुक्तः ।
भेदः किलैष भवता सकलः स एवं
संपत्स्यते बत तवैव हि दूषणाय ॥ ३० ॥

निष्क्रान्तः ।

राजा । आर्य वैहीनरे अतः प्रभृत्यनादृत्य चाणक्यं चन्द्रगुप्तः स्वयमेव राजकार्याणि करिष्यतीति गृहीतार्थाः क्रियन्तां प्रकृतयः ।

[3]कञ्चुकी । स्वगतम् । कथं निरुपपदमेव चाणक्यमिति । हन्त संहृतोऽधिकारः । अथ वा न खल्वत्र वस्तुनि †दैवदोषः ।

---

१ मुक्तामपि H. २ After this is inserted कञ्चु० । देव

कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतिशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् ।
प्रकृतिसुभगा ह्येतेभावाः मदस्य च हेतवो
व्रजति पुरुषो यैरुन्मादं त एव तवाङ्कुशाः ॥

३ चाणक्यो नार्य चाणक्य इति H M. चाणक्यमिति नार्यचाणक्यमिति T.

* Omit एष भवतः कौटिल्यबुद्धि विजिगी । † Read दैवस्य दोषः

स दोषः सचिवस्यैव यदसत् कुरुते नृपः ।
याति यन्तुः प्रमादेन गजो व्यालत्ववाच्यताम् ॥३१॥

**राजा** । आर्य किं विचारयसि ।

**कञ्चुकी** । देव न किंचित् । दिष्ट्या देव इदानीं देवः संवृत्तः ।

[१]**राजा** । स्वगतम् । एवमस्मासु गृह्यमाणेषु स्वकार्यसिद्धिकामः सकामो भवत्वार्यः । प्रकाशम् ।—आर्य शीघ्रं गच्छ ।

**कञ्चुकी** । यदाज्ञापयति देवः । निष्क्रान्तः ।

[१]**राजा** । शोणोत्तरे अनेन शुष्ककलहेन शिरोवेदना मां बाधते । तच्छयनगृहमादेशय ।

**प्रतीहारी** । एदु एदु देवो ॥ एत्वेतु देवः ।

[१]आसनादुत्थाय **राजा** । स्वगतम् ।

आर्याज्ञयैव मम लङ्घितगौरवस्य
बुद्धिः प्रवेष्टुमिव भूविवरं प्रवृत्ता ।
ये सत्यमेव [२]हि गुरूनतिपातयन्ति
तेषां कथं नु हृदयं न भिनत्ति लज्जा ॥३२॥

निष्क्रान्तौ ।

इति कृतककलहो नाम तृतीयोऽङ्कः ।

१ आर्य शीघ्रं गच्छ । कञ्चु० । यदाज्ञापयति देवः । निष्क्रान्तः । omitted M T H. २ म गुरुं प्रतिमानयन्ति M H

## राक्षसोद्योगो नाम
## चतुर्थोऽङ्कः ।

ततः प्रविशत्यध्वगवेषः करभकः ।

**करभकः** । हीमाणहे हीमाणहे ।

[1]जोअणसदं समहिअं *को णाम गदागदं इह करेदि ।
अट्ठाणगमणगुव्वी पहुणो अण्णा जइ ण होदि ॥

जाव अमच्चरक्खसं पेक्खामि । परिक्रम्य । इदं भट्टिणो अमच्चरक्खसस्स गेहं । समन्तादवलोक्य । †को एत्थ दुवारिआणं । णिवेदेह भट्टिणो अमच्चरक्खसस्स एसो [2]केरभओ तुवरन्तो पाडलिउत्तादो आगदो त्ति ॥ आश्चर्यमाश्चर्यम् ।

योजनशत समधिकं को नाम गतागतमिह करोति ।
अस्थानगमनगुर्वी प्रभोराज्ञा यदि न भवति ॥

यावदमात्यराक्षस प्रेक्षे ।...इद भर्तुरमात्य राक्षसस्य गेहम् ।...कोऽत्र दौवारिकाणाम् । निवेदयत भर्त्रेऽमात्यराक्षसाय । एष करभकस्त्वरमाणः पाटलिपुत्रादागत इति ।

प्रविश्य **दौवारिकः** । भद्द सणिअं मन्तेहि । एसो अमच्चो कज्जचिन्ताजणिदेण जाअरेण समुप्पण्णसीसवेअणो अज्ज वि सअणं ण मुञ्चदि । ता चिट्ठ मुहुत्तअं । लद्धावसरो तुह आअमणं णिवेदेमि ॥ भद्र शनैर्मन्त्रयस्व । एषोऽमात्यः कार्यचिन्ताजनितेन जागरेण समुत्पन्नशीर्षवेदनोऽद्यापि शयन न मुञ्चति । तस्मात् तिष्ठ मुहूर्तम् । लब्धावसरस्तवागमनं निवेदयामि ।

**करभकः** । भद्दमुह तह करेहि ॥ भद्रमुख तथा कुरु ।

ततः प्रविशति शयनगतः शकटदासेन सह सचिन्तो राक्षसः ।

**राक्षसः** ।

**मम विमृशतः कार्यारम्भे विधेरविधेयता-**
**[3]मपि च कुटिलां कौटिल्यस्य प्रचिन्तयतो मतिम् ।**
**अथ च [4]विहिते [5]तत्कृत्यानां निकाममुपग्रहे**
**कथमिदमिहेत्युन्निद्रस्य [6]प्रयान्त्यनिशं निशाः ॥ २ ॥**

**अपि च**

---

१ राअणिओओ माहिओ T. २ करहंओ करहओ विअ M H. ३ सहजकु० M H. अपि च कु० T. ४ विहते M. ५ मत् T ६ प्रयान्त्यनिशं निशा T
* Read जोअणसदा समहिअं † Read के

**कार्योपक्षेपमादौ तनुमपि रचयंस्तस्य विस्तारमिच्छन्**
**बीजानां गर्भितानां फलमतिगहनं गूढमुद्भेदयंश्च ।**
**कुर्वन् बुद्ध्या विमर्शं प्रसृतमपि पुनः संहरन् कार्यजातं**
**कर्ता वा नाटकानामिममनुभवति क्लेशमस्मद्विधो वा ॥ ३ ॥**

तदपि नाम* दुरात्मा चाणक्यबटुः—

उपसृत्य **दौवारिकः** । जेदु—॥ जयतु-

**राक्षसः** । अतिसंधातुं शक्यः स्यात् ।

**दौवारिकः** । अमच्चो ॥ अमात्यः ।

**राक्षसः** । वामाक्षिस्पन्दनं सूचयित्वा । दुरात्मा चाणक्यबटुर्जयत्वतिसंधातुं शक्यः स्यादमात्यः । प्रकाशम् । भद्र किमसि वक्तुकामः ।

**दौवारिकः** । अमच्च एसो करभओ पाडलिपुत्तादो आअदो इच्छदि अमच्चं पेक्खिदुं ॥ अमात्य एष करभकः पाटलिपुत्रादागत इच्छति अमात्यं प्रेक्षितुम् ।

**राक्षसः** । शीघ्रं प्रवेशय ।

**दौवारिकः** । जं अमच्चो आणवेदि । निष्क्रम्य पुरुषमुपसृत्य । भद्द उपसप्प अमच्चम् ।इति निष्क्रान्तः॥यदमात्य आज्ञापयति।...भद्र उपसर्पामात्यम्।

**करभकः** । उपसृत्य । जेदु अमच्चो ॥ जयत्वमात्यः ।

**रासक्षः** । भद्र उपविश ।

**करभकः** । जं अमच्चो आणवेदि । भूमावुपविशति ॥ यदमात्य आज्ञापयति ।

**राक्षसः** । स्वगतम् । कस्मिन् प्रयोजने मयायं प्राहित इति प्रयोजनानां बाहुल्यान्न खल्ववधारयामि । चिन्तां नाटयति ।

ततः प्रविशति वेत्रपाणिः पुरुषः ।

**पुरुषः** । ओशलध अय्या ओशलध । अवेध । हीमाणहे ण । पेस्कध—

**दूले पच्चाशत्ती दंशणमवि दुल्लहं अधञ्ञेहिं ।**
**कल्लाणकुलहलाणं [3]देआणं [4]मिदेआणं ॥ ४ ॥**

---

१ इति added H. (वागीश्वरी) वामाक्षिस्पन्दनेन प्रस्तावगतं (vl गता) प्रतिपादयति । तथापि नोद्यमस्त्याज्यः। superadded M T. २ माणहे M T H.

३ देवाण अ ( vl. व) M H, देआणं विअ T. ४ मणुस्सदेआणं T,

* Omit अपि नाम.

आकाशे । अय्या किं भणध । किंणिमित्तं ओशालणा कलीअदित्ति । अय्या एशे खु कुमाले मलयकेदू शमुप्पण्णशीशवेअणं अमच्चलक्कशं पेस्किदुं इदो आगश्चदि । ता ओशालणा कलीअदि । इति निष्क्रान्तः ॥

अपसरत । आर्याः अपसरत । अपेत आश्चर्यम् । न प्रेक्षध्वम्

दूरे प्रत्यासत्तिर्दर्शनमपि दुर्लभमधन्यैः ।
कल्याणकुलगृहाणां देवानां भूमिदेवानाम् ॥

आर्याः किं भणथ । किं निमित्तमुत्सारणा क्रियत इति । आर्याः एष खलु कुमारो मलयकेतुः समुत्पन्नशीर्षवेदनममात्यराक्षसं प्रेक्षितुमित आगच्छति । तदुत्सारणा क्रियते ।

ततः प्रविशति भागुरायणेन कञ्चुकिना चानुगम्यमानो मलयकेतुः ।

**मलयकेतुः** । निःश्वस्यात्मगतम् । अद्य दशमो मासस्तातस्योपरतस्य । न चास्माभिर्वृथापौरुषाभिमानमुद्वहद्भिस्तमुद्दिश्य तोयाञ्जलिरप्यावर्जितः । प्रतिज्ञातं च[1]ैतत् पुरस्तात्

**वक्षस्ताडनभिन्नरत्नवलयं भ्रष्टोत्तरीयांशुकं**
**हाहेत्युच्चरितार्तनादकरुणं भूरेणुरूक्षालकम् ।**
**[2]यादृङ्मातृजनस्य शोकजनितं संप्रत्यवस्थान्तरं**
**शत्रुस्त्रीषु मया विधाय गुरवे देयो निवापाञ्जलिः ॥५॥**

तत्किं बहुना ।

**उद्यच्छता धुरमकापुरुषानुरूपां**
**गन्तव्यमाजिनिधनेन पितुः पथा वा**
**आच्छिद्य वा स्वजननीजनलोचनेभ्यो**
**नेयो मया रिपुवधूनयनानि बाष्पः ॥६॥**

प्रकाशम् । आर्य जाजले *उच्यन्तामस्मद्वचनादनुयायिनो राजानः । एक एवाहममात्यराक्षसस्यातर्कितगमनेन प्रीतिमुत्पादयितुमिच्छामि । तत् कृतमनुगमनेनेति ।

**कञ्चुकी** । यदाज्ञापयति कुमारः । परिक्रम्याकाशे । भो भो राजानः कुमारः समाज्ञापयति । न खल्वहं केनचिदनुगन्तव्य इति । विलोक्य सहर्षम् । कुमारस्याज्ञानन्तरमेव सर्वे राजानो निवृत्ताः । पश्यतु कुमारः ।

---

१ च omitted in all but H (M B). २ तादृङ् M T H.

* Read एक एवा......च्छामि । तदुच्यन्ता......राजानः । कृतमनुगमनेनेति ।

सोत्सेधैः स्कन्धदेशैः खरतरकविकाकर्षणात्यर्थभुग्नै-
रश्वाः कैश्चिन्निरुद्धाः खमिव खुरपुटैः खण्डयन्तः पुरस्तात् ।
कैश्चिन्मातङ्गमुख्यैर्विहतजवतया मूकघण्टैर्निवृत्ता
मर्यादां भूमिपाला जलधय इव ते देव नोल्लङ्घयन्ति ॥७॥

**मलयकेतुः** । आर्य त्वमपि सपरिजनो* निवर्तस्व । भागुरायण एको मामनुगच्छतु ।

**कञ्चुकी** । यदाज्ञापयति कुमारः । *इति सपरिजनो[1] निष्क्रान्तः ।

**मलयकेतुः** । सखे भागुरायण विज्ञप्तोऽहमिहागच्छद्भिर्भद्रभटप्रभृतिभिर्यथा वयममात्यराक्षसद्वारेण न कुमारमाश्रयामहे किंतु कुमारस्य सेनापतिं शिखरसेनं द्वारीकृत्य दुष्टामात्यपरिगृहीताच्चन्द्रगुप्तादपरक्ताः कुमारमाभि[2]गामिकगुणयोगादाश्रयणीयमाश्रयामहे । तन्न मया सुचिरमपि विचारयता तेषां वाक्यार्थोऽधिगतः ।

**भागुरायणः** । कुमार न दुर्बोधोऽयमर्थः । विजिगीषुरात्मगुणसंपन्नः प्रियहितद्वारेणाश्रयणीय इति न्याय्यमेव ।

**मलयकेतुः** । सखे भागुरायण नन्वमात्यराक्षसोऽस्माकं प्रियतमो हिततमश्च ।

**भागुरायणः** । एवमेतत् । किं त्वमात्यराक्षसश्चाणक्ये बद्धवैरो न चन्द्रगुप्ते । तद्यदि कदाचिच्चाणक्यमतिजितकाशिनमसहमानः स साचिव्यादवरोपयेत् ततो नन्दकुलभक्त्या† नन्दान्ववाय एवायमिति सुहृज्ज[3]नापेक्षया चामात्यराक्षसश्चन्द्रगुप्तेन सह संदधीत[4] । एवं सत्यस्मासु कुमारो न विश्वसेदित्ययमेषां वाक्यार्थः ।

**मलयकेतुः** । युज्यते । अमात्यराक्षसस्य गृहमादेशय ।

**भागुरायणः** । इत इतः कुमारः । परिक्रम्य । इदममात्यराक्षसस्य गृहम् । प्रविशतु कुमारः ।

**मलयकेतुः** । एष प्रविशामि ।

---

१ ससैनिको H (B). २ आभिरामिक M T. ३ संपत्सुहृ–M, संजातसुहृ० H.
४ चन्द्रगुप्तोऽपि पितृपर्यायागत एवायमिति संधिमनुमन्येत । added in all but H (M N).

* Read सशौबिको † Read नन्दान्ववाय एवायमिति नन्दकुलभक्त्या

**राक्षसः**। स्वगतम् । आं स्मृतम् । प्रकाशम् । भद्र अपि दृष्टस्त्वया कुसुमपुरे वैतालिकः *स्तनकलशः ।

**करभकः**। अमच्च अह इं ।। अमात्य अथ किम् ।

**मलयकेतुः**। आकर्ण्य । सखे भागुरायण कुसुमपुरवृत्तान्तः प्रस्तूयते तन्नोपसर्पामः । शृणुमस्तावत् । कुतः ।

> [1]सत्त्वभङ्गभयाद्राज्ञां कथयन्त्यन्यथा पुरः ।
> अन्यथा विवृतार्थेषु स्वैरालापेषु मन्त्रिणः ॥८॥

**भागुरायणः**। यदाज्ञापयति कुमारः ।

**राक्षसः**। अपि तत्कार्यं सिद्धम् ।

**करभकः**। अमच्चस्स पसाएण सिद्धं ।। अमात्यस्य प्रसादेन सिद्धम् ।

**मलयकेतुः**। सखे किं तत् कार्यम् ।

**भागुरायणः**। गहनः खलु सचिववृत्तान्तो नैतावता परिच्छेत्तुं शक्यते । अवहितस्तावच्छ्रोतुमर्हति कुमारः ।

**राक्षसः**। विस्तरेण श्रोतुमिच्छामि ।

**करभकः**। सुणादु अमच्चो । अत्थि दाव अहं अमच्चेण आणत्तो । करभअ कुसुमपुरं गच्छिअ मह वअणेण भाणिदव्वो तुए वेआलिओ थणकलसो* जह चाणक्कहदएण तेसु तेसु अण्णाभङ्गेसु अणुचिट्ठीअमाणेसु चन्दउत्तो समुत्तेअणसमत्थेहि सिलोएहि उवसिलोअइदव्वो त्ति ।। शृणोत्वमात्यः । अस्ति तावदहममात्येनाज्ञप्तः । करभक कुसुमपुरं गत्वा मम वचनेन भणितव्यस्त्वया वैतालिकः †स्तनकलशो यथा चाणक्यहतकेन तेषु तेष्वाज्ञाभङ्गेष्वनुष्ठीयमाणेषु चन्द्रगुप्तः समुत्तेजनसमर्थैः श्लोकैरुपश्लोकयितव्य इति ।

**राक्षसः**। ततस्ततः ।

**करभकः**। तदो मए पाडलिउत्तं गदुअ सुणाविदो अमच्चसंदेसं वेआलिओ *थणकलसो । एत्थन्तरे णन्दउलविणासदूणस्स पोरजणस्स परिदोसं समुप्पादअन्तेण चन्दउत्तेण आघोसिदो कोमुदीमहोस्सवो । सो अ चिरकालपरिवट्टमाणो जणिदपरिचओ[2] अभिमदबन्धुजणसमागमो विअ ससिणेहं बहु माणिदो णअरजणेण ।। ततो मया पाटलिपुत्रं गत्वा

---

१ मन्त्रभङ्ग M. २ चिरकालपवत्त(मा)ण जणिदपरिओसो M.H.

†Read थवकलसो. * Read स्तवकलशो ।

श्रावितोऽमात्यसंदेशं वैतालिकः*स्तनकलशः । अत्रान्तरे नन्दकुलविनाशदूनस्य पौरजनस्य परितोषं समुत्पादयता चन्द्रगुप्तेनाघोषितः कौमुदीमहोत्सवः । स च चिरकालपरिवर्तमानो जनितपरिचयोऽभिमतबन्धुजनसमागम इव सस्नेहं बहु मानितो नगरजनेन ।

**राक्षसः** । सबाष्पम् । हा देव नन्द

> **कुमुदानन्दं जगदानन्दहेतुना ।**
> **कीदृशी सति चन्द्रेऽपि नृपचन्द्र त्वया विना ॥९॥**

**करभकः** । तदो सो लोअलोअणाणन्दभूदो अणिच्छन्तस्स य्येव तस्स णिवारिदो चाणक्कहदएण । एत्थन्तरे †थणकलसेण चन्दउत्तसमुत्तेइआ सिलोअपरिवाडी‡ पवट्टिदा ॥ ततः स लोकलोचनानन्दभूतोऽनिच्छत एव तस्य निवारितश्चाणक्यहतकेन । अत्रान्तरे *स्तनकलशेन चन्द्रगुप्तसमुत्तेजिका श्लोकपरिपाटिः प्रवर्तिता ।

**राक्षसः** । कीदृशी सा ।

करभकः सत्त्वोद्रेकस्येत्यादि पूर्वोक्तं पठति ।

**राक्षसः** । सहर्षम् । साधु सखे *स्तनकलश साधु । काले भेदबीजमुप्तमवश्यं फलमुपदर्शयिष्यति । कुतः ।

> **सद्यःक्रीडारसच्छेदं प्राकृतोऽपि न मर्षयेत् ।**
> **किमु लोकाधिकं [3]तेजो बिभ्राणः पृथिवीपतिः ॥१०॥**

**मलयकेतुः** । एवमेतत् ।

**राक्षसः** । ततस्ततः ।

[2]**करभकः** । तदो चन्दउत्तेण अण्णाभङ्गकलुसिदेण पसंग सूइदं अमच्चस्स गुणं पसंसिअ अपब्भंसिदो अहिआरादो चाणक्कहदओ ॥ ततश्चन्द्रगुप्तेनाज्ञाभङ्गकलुषितेन प्रसङ्गसूचितममात्यस्य गुणं प्रशस्यापभ्रष्टोऽधिकाराच्चाणक्यहतकः ।

**मलयकेतुः** । सखे भागुरायण गुणप्रशंसया दर्शितश्चन्द्रगुप्तेन राक्षसे पक्षपातः ।

**भागुरायणः** । कुमार न तथा गुणप्रशंसया यथा चाणक्यबटोर्निराकरणेन ।

---

1 णाअरजणस्स M H. 2 The speech is Omitted in M H. 3 धाम M H.

* Read स्तनकलश † Read थणकलश ‡ Reed परिवाडी

**राक्षसः** । किमर्थमेकः[1] कौमुदीमहोत्सवप्रतिषेधश्चन्द्रगुप्तस्य चाणक्यं प्रति कोपकारणमुतान्यदप्यस्ति ।

**मलयकेतुः** । सखे चन्द्रगुप्तस्यापरकोपकारणान्वेषणेन किं फलमेष पश्यति।

**भागुरायणः** । कुमार मतिमांश्चणक्यो न [2]तुच्छे प्रयोजने चन्द्रगुप्तं कोपयिष्यति । न च कृतवेदी चन्द्रगुप्त एतावता चाणक्यगौरवमुल्लङ्घयिष्यति । सर्वथा चाणक्यचन्द्रगुप्तयोः पुष्कलात् कारणाद्यो विश्लेष उत्पद्येत स अत्यन्तिको भविष्यतीति ।

**करभकः** । अत्थि [3]अण्णं वि चन्दउत्तस्स कोवकारणं उवेक्खिदो णेण अवक्कमन्तो कुमारो मलअकेदू अमच्चरक्खसो अ त्ति ॥ अस्त्यन्यदपि चन्द्रगुप्तस्य कोपकारणमुपेक्षितोऽनेनापक्रामन् कुमारो मलयकेतुरमात्यराक्षसश्चेति ।

**राक्षसः** । सहर्षम् । सखे शकटदास हस्तगतो मे चन्द्रगुप्तो भविष्यति ।

**शकटदासः** । इदानीं चन्दनदासस्य बन्धनान्मोक्षो भवतां च पुत्रदारैः सह समागमः । जीवसिद्धेः संप्रति क्लेशच्छेदः ।

**भागुरायणः** । स्वगतम् । जातः सत्यं जीवसिद्धिप्रभृतीना क्लेशच्छेदः ।

**मलयकेतुः** । सखे हस्तगतो मे चन्द्रगुप्तो भविष्यति इति व्याहरतः कोऽस्याभिप्रायः ।

**भागुरायणः** । किमन्यत् । चाणक्यादपकृष्टस्य चन्द्रगुप्तस्योद्धरणे[5] सौकर्यं पश्यति ।

**राक्षसः** । भद्र हृताधिकारः क्व साम्प्रतमसौ बटुः ।

**करभकः** । तहिं ज्जेव पाडलिउत्ते पडिवसदि ॥ तत्रैव पाटलीपुत्रे प्रतिवसति ।

**राक्षसः** । सावेगम् । किं तत्रैव प्रतिवसति । न तपोवनं गतः प्रतिज्ञां वा न पुनः समारूढवान् ।

**करभकः** । अमच्च तपोवणं गच्छदि त्ति सुणीआदि ॥ अमात्य तपोवनं गच्छतीति श्रूयते ।

**राक्षसः** । सखे शकटदास नेदमुपपद्यते । पश्य ।

---

१ एवैकः M T H. २ निष्प्रयोजनमेव T. ३ अण्णाइं वि चन्दउत्तस्स कोवकारणाइं M H. ४ Read in continuation of the preceeding speech of राक्षसः with the omission of जीवसिद्धेः संप्रति क्लेशच्छेदः । in H. ५ उद्धरणे or सौकर्यं पश्यति । B

देवस्य येन पृथिवीतलवासवस्य
साग्रासनापनयजा निकृतिर्न सोढा।
सोऽयं स्वयंकृतनराधिपतेर्मनस्वी
मौर्यात् कथं नु परिभूतिमिमां सहेत ॥ ११ ॥

**मलयकेतुः** । सखे चाणक्यस्य तपोवनगमने पुनः प्रतिज्ञारोहणे वा कास्य स्वार्थसिद्धिः ।

**भागुरायणः** । नात्यन्तदुर्बोधोऽयमर्थः । यावच्चाणक्यश्चन्द्रगुप्ताद् दूरीभवति तावदे[2]वास्य स्वार्थसिद्धिः ।

**शकटदासः** । अमात्य अलमन्यथा विकल्पितेन । उपपद्यत एवैतत् । पश्यत्वमात्यः ।

राज्ञां चूडामणीन्दुद्युतिखचितशिखे मूर्ध्नि विन्यस्तपादः
स्वैरेवोत्पाद्यमानं किमिति विषहते मौर्य आज्ञाविघातम् ।
कौटिल्यः कोपनोऽपि [3]स्वयमभिचरणे ज्ञातदुःखः प्रतिज्ञां
दैवात् पूर्णप्रतिज्ञः पुनरपि न करोत्यायतिज्यानिभीतः ॥१२॥

**राक्षसः** । सखे शकटदास एवमेतत् । गच्छ विश्रामय करभकम् ।

**शकटदासः** । यदाज्ञापयत्यमात्यः । करभकेण सह निष्क्रान्तः ।

**राक्षसः** । अहमपि कुमारं द्रष्टुमिच्छामि ।

**मलयकेतुः** । उपसृत्य । अहमेवार्यं द्रष्टुमागतः ।

**राक्षसः** । अवलोक्य । अये कुमारः । आसनादुत्थाय । इदमासनम् । उपवेष्टुमर्हति कुमारः ।

**मलयकेतुः** । अयमुपविशामि । उपविशत्वार्यः । यथार्हमुपविष्टौ ।

**मलयकेतुः** । आर्य अपि सह्या शिरोवेदना ।

**राक्षसः** । कुमारस्याधिराजशब्देनातिरस्कृते कुमारशब्दे कुतो मे शिरोवेदनायाः सह्यता ।

**मलयकेतुः** । उरीकृतमेतदार्येण न दुष्प्रापं भविष्यति । तत् कियन्तं कालमस्माभिरेवं संभृतबलैरपि शत्रुव्यसनं प्रतीक्षमाणैरुदासितव्यम् ।

**राक्षसः** । कुतोऽद्यापि कालहरणस्यावकाशः । प्रतिष्ठस्व विजयाय ।

**मलयकेतुः** । आर्य अपि किंचिच्छत्रोर्व्यसनमुपलब्धम् ।

---

१ निरपेक्षः added before चन्द्र M H. २ एव omitted in all but H (E)
३ अतिचरणे M. ४ ग्लानि T.

**राक्षसः** । उपलब्धम्—

**मलयकेतुः** । कीदृशं तत् ।

**राक्षसः** । सचिवव्यसनम् । किमन्यत् । अपकृष्टश्चाणक्याच्चन्द्रगुप्तः ।

**मलयकेतुः** । आर्य सचिवव्यसनमव्यसनमेव ।

**राक्षसः** । अन्येषां भूपतीनां सचिवव्यसनमव्यसनं स्यान्न पुनश्चन्द्रगुप्तस्य ।

**मलयकेतुः** । आर्य नैतदेवम् । चन्द्रगुप्तप्रकृतीनां चाणक्यदोषा अपरागहेतवः । तस्मिन् निराकृते प्रथममपि चन्द्रगुप्तेऽनुरक्ताः संप्रति सुतरामेव तत्रानुरागं दर्शयिष्यन्ति ।

**राक्षसः** । मैवम् । इह खलु द्विप्रकाराः प्रकृतयश्चन्द्रगुप्तसहोत्थायिन्यो नन्दकुलानुरक्ताश्च । तत्र चन्द्रगुप्तसहोत्थायिनीनां चाणक्यदोषा अपरागहेतवो न नन्दकुलानुरक्तानाम् । तास्तु नन्दकुलमनेन पितृकुलभूतं कृतघ्नेन घातितमित्यपरागामर्षाभ्यां विप्रकृताः सत्यः स्वाश्रयमलभमानाश्चन्द्रगुप्तमनुवर्तन्ते । त्वादृशं पुनः प्रतिपक्षोद्धरणे संभावितशक्तिमभियोक्तारमासाद्य क्षिप्रमेनं परित्यज्य त्वामेवाश्रयिष्यन्ते । अत्र निदर्शनं वयमेव ।

**मलयकेतुः** । आर्य किमेतदेकमेव सचिवव्यसनमभियोगकारणं चन्द्रगुप्तस्याहोस्विदन्यदप्यस्ति ।

**राक्षसः** । कुमार किमन्यैर्बहुभिः । एतद्धि प्रधानतमम् ।

**मलयकेतुः** । आर्य कथमिव प्रधानतमम् । किमिदानीं चन्द्रगुप्तः स्वकार्यधुरामन्यत्र मन्त्रिणि समासज्य स्वयं प्रतिविधातुमसमर्थः ।

**राक्षसः** । बाढम् । असमर्थः । स्वायत्तसिद्धिषु भूमिपालेष्वेतत् संभवति । चन्द्रगुप्तस्तु दुरात्मा नित्यं सचिवायत्तसिद्धिरेव स्थितश्चक्षुर्विकल इवाप्रत्यक्षलोकव्यवहारः कथमिव स्वयं प्रतिविधातुं समर्थः स्यात् ।

---

१ मल० । ननु विशेषतश्चन्द्रगुप्तस्य ॥ राक्ष० । किं कारणम् ॥ मल० । in place of मल० । आर्य नैतदेवम् ॥ H. २ सिद्धावेव (अव) स्थितः M T H ३ After this all but H(M N B) insert कुत. । अत्युच्छ्रिते०andअपि च ।

अत्युच्छ्रिते मन्त्रिणि पार्थिवे च विष्टभ्य पादावुपतिष्ठते श्रीः ।
सा स्त्रीस्वभावादसहा भरस्य तयोर्द्वयोरेकतरं जहाति ॥

नृपोऽपकृष्टः सचिवात् तदर्पणः
स्तनंधयोऽत्यन्तशिशुः स्तनादिव ।
अदृष्टलोकव्यवहारमूढधी–
र्मुहूर्तमप्युत्सहते न वर्तितुम् ॥१३॥

**मलयकेतुः** । स्वगतम् । दिष्ट्या न सचिवायत्तसिद्धिरस्मि । प्रकाशम् । यद्यप्येवं तथापि बहुष्वभियोगकारणेषु सत्सु सचिवव्यसनिनं[1] शत्रुम-
३भियोक्तुरैकान्तिकी सिद्धिर्भवति ।

**राक्षसः** । ऐकान्तिकीमेव सिद्धिमवगन्तुमर्हति कुमारः । कुतः ।

त्वय्युत्कृष्टबलेऽभियोक्तरि नृपे नन्दानुरक्ते पुरे
चाणक्ये चलिताधिकारविमुखे मौर्ये नवे राजनि ।
स्वाधीने मयि ( इत्यर्धोक्ते लज्जां नाटयन् )
मार्गमात्रकथनव्यापारयोगोद्यमे
त्वद्वाञ्छान्तरितानि संप्रति विभो तिष्ठन्ति साध्यानि नः॥१४॥

**मलयकेतुः** । यद्येवमभियोगकालमार्यः पश्यति ततः किमास्यते ।

उत्तुङ्गास्तुङ्गकूलं द्रुतमदसलिलाः प्रस्यन्दिसलिलं
श्यामाः श्यामोपकण्ठद्रुममतिखराः कल्लोलमुखरम् ।
स्रोतःखातावसीदत्तटमुरुदशनैरुत्सादिततटाः
शोणं सिन्दूरशोणा मम [2]गजपतयोऽपास्यन्तु शतशः॥१५॥

अपि च

गम्भीरगर्जितरवाः स्वमदाम्बुमिश्र–
वमासारवर्षिणम्* शीकरमुद्गिरन्त्यः ।
विन्ध्यं विकीर्णसलिला इव मेघमाला
रुन्धन्तु[3] वारणघटा नगरं मदीयाः ॥ १६ ॥

भागुरायणेन सह निष्क्रान्तो मलयकेतुः ।

**राक्षसः** । कः कोऽत्र भोः ।

प्रविश्य **पुरुषः** । आणवेदु अमच्चो ॥ आज्ञापयत्वमात्यः ।

---

१ व्यसनमभियुञ्जानस्य शत्रु० in all but H(M). २ पतयः पास्यन्ति M T H.
३ रोत्स्यान्ति M H. * Read इह

**राक्षसः** । प्रियंवदकं[1] सांवत्सरिकाणां द्वारि कस्तिष्ठति ।

**पुरुषः** । खवणओ–[2] ।। क्षपणकः—

६ आनिमित्तं सूचयित्वा **राक्षसः** । कथम् *प्रथममेव क्षपणकः[3] ।

**पुरुषः** । जीवसिद्धी ।। जीवसिद्धिः ।

**राक्षसः** । अबीभत्सदर्शनं कार[4]यित्वा †प्रवेशयैनम् ।

९ **पुरुषः** । जं अमच्चो आणवेदि । निष्क्रान्तः ।। यदमात्य आज्ञापयति ।

प्रविश्य **क्षपणकः** ।

> **शाशणमलिहन्ताणं पडिवय्यध मोहवाधिवेय्याणं ।**
> **ये पढममेत्तकडुअं पश्चापश्चं उवदिशन्दि ॥ १७ ॥**

उपसृत्य । **शावगा धम्मशिद्धी होदु ॥**

> शासनमर्हतां प्रतिपद्यध्वं मोहव्याधिवैद्यानाम् ।
> ये प्रथममात्रकटुक पश्चात्पथ्यमुपदिशन्ति ॥

श्रावक धर्मसिद्धिर्भवतु ।

**राक्षसः** । भदन्त निरूप्यतां तावदस्माकं प्रस्थानादिवसः ।

३ **क्षपणकः** चिन्तयित्वा । **शावगा णिलूविदे आ मज्झण्णादो णिव्वुत्तशा[5]-मस्तकल्लाणा पुण्णमाशी[6] । तुह्माणं उत्तलाए दिशाए दक्खिण दिशं पस्तिदाणं अ दक्खिणे[7] णक्खत्ते । अवि अ**

> **अस्ताहिमुहे शूले उदिदे शंपुण्णमण्डले चन्दे ।**
> **गमणे बुधश्श[8] लग्गे उदिदस्तमिदम्मि केदुम्मि ॥१८॥**

६ श्रावक निरूपितः । आ मध्याह्नान्निर्वृत्तसमस्तकल्याणा पौर्णमासी । युष्माकमुत्तरस्या दिशो दक्षिणां दिश प्रस्थितानां च दक्षिण नक्षत्रम् ।

---

१ ज्ञायता added after this M H २ जं अमच्चो आणवेदि । निष्क्रम्य पुन. प्रविष्य । अमच्च एसो खु संवच्छरिओ added before this M H ३ क्षपणकदर्शनम् M ४ कृत्वा T H. ५ णिवुत्तसत्तसकला M, णिवुत्तशअलदोशा H णिवुत्तसअलकल्लाणा T ६ तिही ( भोदि ) शपुण्ण चन्दा added before this M T H. ७ दनाकिणदुवालिए in all but H (L). ८ बुधश्श M.

* Omit प्रथममेव. † Omit कारयित्वा.

अपि च

अस्ताभिमुखे शूर उदिते सपूर्णमण्डले चन्द्रे ।
गमने बुधस्य लग्नमुदितास्तमिते च केतौ ।

**राक्षसः** । भदन्त तिथिरेव तावन्न शुध्यति ।

**क्षपणकः** । शावगा एक्कगुणातिधी चउग्गुणे णऽकत्ते* चउशदगुणे अलग्गे एशे योइशिअशिद्धन्ते[१]।

ता

**लग्गे [२]होदि शुलग्गे [३]शोम्मम्मि गहे यहाहि दुल्लग्गं ।**
**पाविहि[४] दीहं लाहं चन्दश्श बलेण गश्चन्ते ॥ १९ ॥**

श्रावक एकगुणा तिथिश्चतुर्गुणं नक्षत्रं । चतुःशतगुणं लग्नं एष ज्यौतिषिकसिद्धान्तः ॥

तत्

लग्नं भवति सुलग्नं सौम्ये ग्रहे जहाहि दुर्लग्नम् ।
प्राप्नुहि दीर्घं लाभं चन्द्रस्य बलेन गच्छन् ॥

**राक्षसः** । भदन्त अपरैः सांवत्सरिकैः सह संवाद्यताम् ।

**क्षपणकः** । शंवादेदु शावगे । हगे उण गमिश्शं ॥ संवादयतु श्रावकः । ३अह पुनर्गमिष्यामि ।

**राक्षसः** । [५]कथम् । कुपितो भदन्तः ।

**क्षपणकः** । कुविदे ण तुह्माणं भदन्ते ॥ कुपितो न युष्माक भदन्तः ।

६**राक्षसः** । कस्तर्हि ।

**क्षपणकः** । भअवं कदन्ते । येण अत्तणो पऽकं उज्झिअ पलश्श पऽकं पमाणीकलेशि । निष्क्रान्तः ॥ भगवान् कृतान्तः । येनात्मनः पक्षमुज्झित्वा ९परस्य पक्षं प्रमाणीकरोषि ।

---

१ The passage appears in a metrical form as under in M T H एक्कगुणा ( भोदि ) तिधी चउग्गुणे ( भोदि ) णऽकत्ते । चउशस्टिगुणे लग्गे एशे ( दीसदि ) यो दिशि अतन्त ( v l जोइस and जोइसतन्त ) शिद्धंते २ होहि H. ३ कूलग्गहं पलिहलिज्जासु M, सोमम्मि गहम्मि जइवि । दुल्लग्गे, T, शोमं पि गहं यहाहि दुल्लग्गं H ४ वहेहि...सिर्द्धि T, पाविहिशि दीह्मा H ५ न खलु कुपितो भदन्तः । in all but H (M)

* Read शदगुणे अ चन्दे ।

**राक्षसः** । प्रियंवदक का वेला वर्तते ।

**पुरुषः** । अमच्च अत्थाहिलासी सूरो ॥ अमात्य अस्ताभिलाषी सूरः ।

१२ **राक्षसः** । आसनादुत्थाय विलोक्य । अये अस्ताभिलाषी भगवान् भास्करः । संप्रति हि

**आविर्भूतानुरागाः क्षणमुदयगिरेरुज्जिहानस्य भानोः**
**पर्णच्छायैः पुरस्तादुपवनतरवोऽदूरमाश्वेव गत्वा ।**
**एते तस्मिन् निवृत्ताः पुनरपरगिरिप्रान्तपर्यस्तबिम्बे**
**प्रायो भृत्यास्त्यजन्ति प्रचलितविभवं स्वामिनं सेवमानाः॥२०॥**

निष्क्रान्तौ ।

इति राक्षसोद्योगो नाम चतुर्थोऽङ्कः ।

कूटलेखो नाम
पञ्चमोऽङ्कः ।

ततः प्रविशति समुद्र लेखमलंकारपेटिकां चादाय सिद्धार्थकः ।

**सिद्धार्थकः** । हीमाणहे ।

**बुद्धिजलणिज्झरेहिं सिच्चन्ती देसकालकलसेहिं ।**
**दंसिस्सदि कज्जफलं गरुअं चाणक्कणीदिलदा ॥ १ ॥**

ता गहीदो मए अज्जचाणक्केण पढमलेहिदो अमच्चरक्खसस्स मुद्दालञ्छिदो अअं लेहो तस्स य्येव मुद्दालञ्छिदा इअं अ आहरणपेडिआ । चलिदो ह्मि किल पाडलिउत्तं । जाव गच्छामि । परिक्रम्यावलोक्य च । कहं खवणओ आअच्छदि । जाव से आअमणं पडिवालेमि ॥

आश्चर्यम् ।

बुद्धिजलनिर्झरैः सिच्यमाना देशकालकलशैः ।
दर्शयिष्यति कार्यफलं गुरुकं चाणक्यनीतिलता ॥

तद् गृहीतो मयार्यचाणक्येन प्रथमलेखितोऽमात्यराक्षसस्य मुद्रालाञ्छितोऽयं लेखस्तस्यैव मुद्रालाञ्छितेयं चाभरणपेटिका । चलितोऽस्मि किल पाटलिपुत्रम् । यावद् गच्छामि ।...कथं क्षपणक आगच्छति । यावदस्यागमनं प्रतिपालयामि ।

प्रविश्य **क्षपणकः** ।

**अलिहन्ताणं पणमामो ये गम्भीलदाइ बुद्धीए ।**
**लोउत्तलहि लोए शिद्धिं मग्गेहिं गच्छन्ति ॥ २ ॥**

अर्हतः प्रणमामो ये गम्भीरतया बुद्धेः ।
लोकोत्तरैर्लोके सिद्धिं मार्गैर्गच्छन्ति ॥

**सिद्धार्थकः** । भदन्त वन्दामि ॥ भदन्त वन्दे ।

**क्षपणकः** । शावगा धम्मशिद्धी होदु । निर्वर्ण्य । शावगा पस्ताणशमुव्वहणे *किदव्ववशाअं तुमं पेक्खामि ॥ श्रावक धर्मसिद्धिर्भवतु । ...। श्रावक प्रस्थानसमुद्वहने कृतव्यवसाय त्वां प्रेक्षे ।

**सिद्धार्थकः** । कहं भदन्तो जाणादि ॥ कथं भदन्तो जानाति ।

---

१ जीव मे (vl से) असउणभूदं दंसणं (ता) आदित्त (vl सुद्ध) दंसणेण पडिहणामि (vl पाडिहरामि) H M जाव...दंसणं मह संमदं एव्व ता ण पडिहरामि T. समुद्दसंतलण किद० M, २ अस्ताण शंतलण कद० H.

* Read पस्ताणे.

**क्षपणकः** । शावगा किं एत्थ याणिदव्वं । एशे दे [1]मग्गदंशणकुशले लेहे अ शूएदि ॥ श्रावक किमत्र ज्ञातव्यम् । एष ते मार्गदर्शनकुशलो लेखश्च सूचयति ।

**सिद्धार्थकः** । जाणिदं भदन्तेन । देसन्तरं पत्थिदो ह्मि । ता कहेदु भदन्तो कीदिसो अज्ज दिवसो त्ति । ज्ञात भदन्तेन । देशान्तर प्रस्थितो ऽस्मि । तस्मात् कथयतु भदन्तः कीदृशोऽद्य दिवस इति ।

**क्षपणकः** । विहस्य । शावगा मुण्डं मुण्डाविअ णक्खत्ताणि पुश्चाशि ॥ श्रावक मुण्ड मुण्डयित्वा नक्षत्राणि पृच्छासि ।

**सिद्धार्थकः** । भदन्त संपदं वि किं जादं । कहेहि । जदि अणुऊलं भविस्सदि तदो गमिस्सं। अण्णधा णिवत्तिस्सं ॥ भदन्त साम्प्रतमपि कि जातम् । कथय । यद्यनुकूलं भविष्यति ततो गमिष्यामि । अन्यथा निवर्तिष्ये ।

**क्षपणकः** । शावगा ण शंपदं एदस्सिं मलयकेदुकडए अणुऊलेण[2] गश्चीअदि ॥ श्रावक न सांप्रतमेतस्मिन्मलयकेतुकटकेऽनुकूलेन गम्यते ।

**सिद्धार्थकः** । भदन्त कहेहि कुदो एदम् ॥ भदन्त कथय कुत एतत् ।

**क्षपणकः** । शावगा णिशामेहि । पढमं दाव एत्थ *कडए लोअश्श अणिवालिदा णिग्गमप्पवेशा आशि । दाणिं इदो पच्चाशण्णे कुशुमपुले ण केवि अमुद्दालञ्छिदे णिग्गमिदुं पवेस्टुं वा अणुमोदीअदि । ता यदि भाउलायणश्श मुद्दाए लञ्छिदे शि तदो गश्च वीशद्धे । अण्णधा चिष्ठ णिहुदे । मा गुम्माहिआरिएहिं शंयमिदकलचलणे लाअउलं पवेशीअशि ॥ श्रावक निशामय । प्रथम तावदत्र कटके लोकस्यानिवारिता निर्गमप्रवेशा आसन् । इदानीमितः प्रत्यासन्ने कुसुमपुरे न कोऽप्यमुद्रालाञ्छितो निर्गन्तुं प्रवेष्टुं वानुमोद्यते । तस्माद्यदि मुद्रया लाञ्छितोऽसि ततो गच्छ विश्रब्धः । अन्यथा तिष्ठ निभृतः । मा गुल्माधिकारिभिः संयमितकरचरणो राजकुलं प्रवेश्यसे ।

**सिद्धार्थकः** । किं न जाणादि भदन्तो जह अहं अमच्चरक्खसस्स केरओ सिद्धत्थओ । ता अमुद्दालञ्छिदं वि मं णिक्कमन्तं कस्स सत्ती

---

१ मग्गणाओकण्णधारे M, मग्गादेशकुशले शउणे कलगदे T.H. २ अणुऊलेण अणणुऊलेण वा (अगहिदमुद्देण) गश्चीअदि । M H, अणुउलं भविस्सादि । T.

* Omit कडए

णिवारेदुं ॥ किं न जानाति भदन्तो यथाहममात्यराक्षसस्य सिद्धार्थकः । तस्मादमुद्रालाञ्छितमपि मां निष्क्रामन्तं कस्य शक्तिर्निवारयितुम् ।

**क्षपणकः** । शावगा लक्खशस्स पिशाचस्स वा केलगे होहि । ण उण दे अमुद्दालञ्छिदस्स इदो णिक्कमणोवाए ॥ श्रावक राक्षसस्य पिशाचस्य वा भव । न पुनस्तेऽमुद्रालाञ्छितस्येतो निष्क्रमणोपायः ।

**सिद्धार्थकः** । भदन्त मा कुप्प । भण मे कज्जसिध्धी होदु त्ति ॥ भदन्त मा कुप्य । भण मे कार्यसिद्धिर्भवत्विति ।

**क्षपणकः** । शावगा गश्च । होदु दे कय्यसिद्धी । हगे वि भाउलायणादो मुद्दं याचेमि । निष्क्रान्तौ ॥ श्रावक गच्छ । भवतु ते कार्यसिद्धिः । अहमपि भागुरायणान्मुद्रां याचे ।

इति प्रवेशकः ।

ततः प्रविशति पुरुषेणानुगम्यमानो भागुरायणः ।

**भागुरायणः** । स्वगतम् । अहो वैचित्र्यमार्यचाणक्यनीतेः ।

> मुहुर्लक्ष्योद्भेदा मुहुरधिगमाभावगहना
> मुहुः संपूर्णाङ्गी मुहुरतिकृशा कार्यवशतः ।
> मुहुर्नश्यद्बीजा मुहुरपि बहुप्रापितफले-
> त्यहो चित्राकारा नियतिरिव नीतिर्नयविदः ॥३॥

प्रकाशम् । भासुरक न मां दूरीभवन्तमिच्छति कुमारः । अतोऽस्मिन्नेवास्थानमण्डपे न्यस्यतामासनम् ।

**पुरुषः** । एदं आसणं । उवविसदु अज्जो ॥ एतदासनम् । उपविशत्वार्यः ।

**भागुरायणः** । उपविश्य । यः कश्चिन्मुद्रार्थी मां द्रष्टुमिच्छेत् स त्वया प्रवेशयितव्यः ।

**पुरुषः** । जं अज्जो आणवेदि । निष्क्रान्तः ॥ यदार्य आज्ञापयति ।

**भागुरायणः** । स्वगतम् । *कष्टम् । एवमस्मासु स्नेहवान् कुमारो मलयकेतुरतिसंधातव्य इत्यहो दुष्करम् । अथ वा

> कुले लज्जायां च स्वयशसि च माने च विमुखः
> शरीरं विक्रीय क्षणिकधनलोभाद्[2] धनवति ।

---

1 पाडलिउत्तं गन्तुं added after this M. 2 °धनलोभाद् M. °मपि लोभाद्.
* Omit स्वगतम् । कष्टम् ।

तदाज्ञां कुर्वाणो हितमहितमित्येतदधुना
विचारातिक्रान्तः किमिति परतन्त्रो विमृशति ॥४॥

ततः प्रविशति प्रतीहार्यानुगम्यमानो मलयकेतुः ।

**मलयकेतुः** । स्वगतम् । अहो राक्षसं प्रति विकल्पबाहुल्यादाकुला मे बुद्धिर्न निश्चयमाधिगच्छति । कुतः ।

भक्त्या नन्दकुलानुरागदृढया नन्दान्वयालम्बिना
किं चाणक्यनिराकृतेन कृतिना मौर्येण संधास्यते ।
स्थैर्यं भक्तिगुणस्य वा विगणयन् किं सत्यसंधो भवे-
दित्यारूढकुलालचक्रमिव मे चेतश्चिरं भ्राम्यति ॥५॥

प्रकाशम् । विजये क्व भागुरायणः ।

**प्रतीहारी** । कुमार एसो खु कडआदो णिक्कमिदुकामाणं मुद्दासंपदाणं अणुचिट्ठादि ॥ कुमार एष खलु कटकान्निष्क्रामितुकामानां मुद्रासंप्रदानमनुतिष्ठति ।

**मलयकेतुः** । विजये मुहूर्तमसंचारा भव । यावदस्य पराङ्मुखस्यैव पाणिभ्यां नयने पिदधामि ।

**प्रतीहारी** । जं कुमारो आणवेदि ॥ यत्कुमार आज्ञापयति ।

प्रविश्य **पुरुषः** । अज्ज एसो खु खवणओ मुद्दाणिमित्तं अज्जं पेक्खिदु इच्छदि ॥ आर्य एष खलु क्षपणको मुद्रानिमित्तमार्यं प्रेक्षितुमिच्छति ।

**भागुरायणः** । प्रवेशय ।

**पुरुषः** । जं अज्जो आणवेदि । निष्क्रान्तः ॥ यदार्य आज्ञापयति ।

प्रविश्य **क्षपणकः** । शावगा धम्मशिद्धी होदु ॥ श्रावक धर्मसिद्धिर्भवतु ।

**भागुरायणः** । स्वगतम् । अये राक्षसस्य मित्रं जीवसिद्धिः । प्रकाशम् । भदन्त न खलु राक्षसस्य प्रयोजनं किंचिदुद्दिश्य गम्यते ।

**क्षपणकः** । कर्णौ पिधाय । शान्तं पावं । शावगा तहिं गमिश्शं यहिं लक्कशश्श णामं वि ण शुणीअदि ॥ ...शान्त पापम् । श्रावक तत्र गमिष्यामि यत्र राक्षसस्य नामापि न श्रूयते ।

**भागुरायणः** । बलीयान् सुहृदि प्रणयकोपः । तत् किमपराद्धं राक्षसेन भदन्तस्य ।

---

१ वाधिगणयन् T. २ संपादणं T. ३ पिशाचस्स वा added after this MT.

क्षपणकः। शावगा ण मम किंवि लक्कशेण अवलद्धं। शयं य्येव
२१मन्दभग्गो अत्तणो अवलज्झामि ॥ श्रावक न मम किमपि राक्षसेनापराद्धम्। स्वयमेव मन्दभाग्य आत्मनोऽपराध्यामि।

भागुरायणः। भदन्त वर्धयसि मे कुतूहलम्—

२४मलयकेतुः। स्वगतम्। मम च।

भागुरायणः।—श्रोतुमिच्छामि।

मलयकेतुः। स्वगतम्। अहमपि।

२७क्षपणकः। शावगा किं एदिणा शुदेण ॥ श्रावक किमेतेन श्रुतेन।

भागुरायणः। यदि रहस्यं तत् तिष्ठतु।

क्षपणकः। णहि लहश्शं ॥ नहि रहस्यम्।

३०भागुरायणः। यदि न रहस्यं तत् कथ्यताम्।

क्षपणकः। शावगा ण लहश्शं एदं। तहवि ण कहिश्शं ॥ श्रावक न रहस्यमेतत्। तथापि न कथयिष्यामि।

३३भागुरायणः। अहमपि मुद्रां न दास्यामि।

क्षपणकः। स्वगतम्। युक्तमिदानीमर्थिने कथयितुम्। प्रकाशम्। का गदी। एशे णिवेदेमि शुणादु शावगे। अस्ति दाव हगे मन्दभग्गे पढमं पाडलिउत्ते
३६णिवशमाणे लक्कशश्श मित्तत्तणं उवगदे। तहिं अन्तले लक्कशेण गूढं विशकञ्ञआपयोअ उप्पादिअ घादिदे देवे पव्वदीशले ॥ का गतिः। एष निवेदयामि। शृणोतु श्रावकः। अस्ति तावदहं मन्दभाग्यः प्रथमं पाट-
३९लिपुत्रे निवसन् राक्षसस्य मित्रत्वमुपगतः। तत्रान्तरे राक्षसेन गूढं विषकन्यकाप्रयोगमुत्पाद्य घातितो देवः पर्वतेश्वरः।

मलयकेतुः। सबाष्पमात्मगतम्। कथं राक्षसेन घातितस्तातो न चाण-
४२क्येन।

*भागुरायणः। ततस्ततः।

४५क्षपणकः। तदो हगे लक्कशस्स मित्तं †त्ति कदुअ चाणक्कहदएण शणिआलं णअलादो णिव्वाशिदे। दाणिं वि लक्कशेण लायकय्यकुशलेण किंवि तालिशं आलहीअदि येण हगे यीअलोआदो णिव्वा-
४८शिय्यामि ॥ ततोऽहं राक्षसस्य मित्रमिति कृत्वा चाणक्यहतकेन सनिकारं

---

* Omit the speech. †Add घादगे here.

नगरान्निर्वासितः। इदानीमपि राक्षसेन राजकार्यकुशलेन किमपि तादृशमारभ्यते येनाहं जीवलोकान्निर्वासयिष्ये।

५१ **भागुरायणः**। भदन्त प्रतिश्रुतराज्यार्धसंप्रदानमनिच्छता चाणक्यहतकेनेदमकार्यमनुष्ठितं न राक्षसेनेति श्रुतमस्माभिः।

**क्षपणकः**। कर्णौ पिधाय। शन्तं पावं। चाणक्केण विशकञ्ञाए णाम वि ण शुदम्॥ शान्तं पापम्। चाणक्येन विषकन्याया नामापि न श्रुतम्।

५४ **भागुरायणः**। भदन्त इयं मुद्रा दीयते। एहि कुमारं श्रावय।

**मलयकेतुः**। सास्रमुपसृत्य।

**श्रुतं सखे श्रवणविदारणं वचः**
**सुहृन्मुखाद्रिपुमधिकृत्य भाषितम्।**
**पितुर्वधव्यसनमिदं हि येन मे**
**चिरादपि द्विगुणमिहाद्य वर्धते॥ ६॥**

**क्षपणकः**। स्वगतम्। अये श्रुतं मलयकेतुहतकेन। हन्त [1]कृतार्थोऽस्मि। निष्क्रान्तः।

३ **मलयकेतुः**। प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा। राक्षस अयुक्तमिदम्।

**मित्रं ममायमिति निर्वृतचित्तवृत्तिं**
**विश्रम्भतस्त्वयि निवेशितसर्वकार्यम्।**
**तातं निपात्य सह बन्धुजनाश्रुतोयै-**
**[2]रन्वर्थतोऽपि ननु राक्षस राक्षसोऽसि॥ ७॥**

**भागुरायणः**। स्वगतम्। रक्षणीया राक्षसस्य प्राणा इत्यार्यादेशः। भवतु। एवं तावत्। प्रकाशम्। कुमार अलमावेगेन। आसनस्थं

३ कुमारं किंचिद्विज्ञापयितुमिच्छामि।

**मलयकेतुः**। उपाविश्य। सखे किमसि वक्तुकामः।

**भागुरायणः**। कुमार इह खल्वर्थशास्त्रव्यवहारिणामर्थवशादरिमित्रो-

६ दासीनव्यवस्था न लौकिकानामिव स्वेच्छावशात्। अतस्तस्मिन् काले सर्वार्थसिद्धिं राजानमिच्छतो राक्षसस्य चन्द्रगुप्तादपि बलीयस्तया सुगृहीतनामा देवः पर्वतेश्वर एवार्थपरिपन्थी महानरातिरासीत्। तस्मिंश्च

९ राक्षसेनेदमनुष्ठितमिति [3]नातिदोषमिवात्र पश्यामि। पश्यतु कुमारः।

---

१ कृतार्थः कौटिल्यः। H २ अन्वर्थसंज्ञ H. ३ नास्ति दोष एवात्रेति T, न दोषमिवात्र H.

मित्राणि शत्रुत्वमिवानयन्ती मित्रत्वमप्यर्थवशाच्च शत्रून् ।
नीतिर्नयत्यस्मृतपूर्ववृत्तं जन्मान्तरं जीवित एव पुंसः ॥८॥

तदत्र वस्तुनि नोपालम्भनीयो राक्षसः । आ नन्दराज्यलाभादुपग्राह्यश्च । परतस्तस्य परिग्रहे वा परित्यागे वा कुमारः प्रमाणम् ।

**मलयकेतुः** । एवम् । सखे सम्यग् दृष्टवानसि । यतोऽमात्यवधे प्रकृतिक्षोभः स्यात् । एवं च संदिग्धो विजयः स्यात् ।

प्रविश्य **पुरुषः** । जेदु कुमारो । अज्ज गुम्माहिकिदो [1]दीहचक्खू विण्णवेदि । एसो खु अह्मेहिं कडआदो णिक्कमन्तो अगहीदमुद्दो सलेहो पुरिसो गहीदो । ता पच्चक्खीकरेदु णं अज्जो त्ति ॥ जयतु कुमारः । आर्य गुल्माधिकृतो दीर्घचक्षुर्विज्ञापयति । एष खल्वस्माभिः कटकान्निष्क्रामन्नगृहीतमुद्रः सलेखः पुरुषो गृहीतः । तत् प्रत्यक्षीकरोत्वेनमार्य इति ।

**भागुरायणः** । भद्र प्रवेशय ।

**पुरुषः** । जं अज्जो आणवेदि । निष्क्रान्तः ॥ यदार्य आज्ञापयति ।

ततः प्रविशति पुरुषेणानुगम्यमानः संयतः सिद्धार्थकः ।

**सिद्धार्थकः** । स्वगतम् ।

[2]आणन्तीए* गुणेसु दोसेसु परंमुहं कुणन्तीए ।
अह्मारिसजणणीए णमो णमो सामिभत्तीए ॥ ९ ॥

आनयन्त्यै गुणेषु दोषेषु च पराङ्मुखं कुर्वत्यै ।
अस्मादृशजनन्यै नमो नमः स्वामिभक्त्यै ॥

उपसृत्य **पुरुषः** । अज्ज अअं सो पुरिसो ॥ आर्य अयं स पुरुषः ।

**भागुरायणः** । विलोक्य । भद्र किमयमागन्तुक आहोस्विदिहैव कस्यचित् परिग्रहः ।

**सिद्धार्थकः** । अज्ज अहं खु अमच्चरक्खसस्स केरओ ॥ आर्य अहं खल्वमात्यराक्षसस्य ।

**भागुरायणः** । तत् किमगृहीतमुद्रः कटकान्निष्क्रामसि ।

**सिद्धार्थकः** । अज्ज कज्जगोरवेण तुवराविदो ह्मि ॥ आर्य कार्यगौरवेण त्वरायितोऽस्मि ।

**भागुरायणः** । कीदृशं तत् कार्यगौरवं यद्राजशासनमुल्लङ्घयति ।

---

१ दीहरक्खो T. २ तिप्पन्तीए M

* Read आणत्तीअ

**मलयकेतुः** । सखे भागुरायण लेखम[1]ुपनय ।

**भागुरायणः** । सिद्धार्थकहस्ताल्लेख गृहीत्वा । कुमार अयं लेखः । मुद्रां दृष्ट्वा । राक्षसनामाङ्कितेयं मुद्रा ।

**मलयकेतुः** । मुद्रां परिपालयन्नुद्वेष्ट्य[2] दर्शय ।

भागुरायणस्तथा कृत्वा दर्शयति ।

**मलयकेतुः** । वाचयति । स्वस्ति । यथास्थानं कुतोऽपि कोऽपि कमपि पुरुषविशेषमवगमयति । अस्मत्प्रतिपक्षं निराकृत्य दर्शिता सत्यवादिता सत्यवता । सांप्रतमेतेषामपि प्रथममुपन्यस्तसंधीनामस्मत्सुहृदां प्रतिज्ञातसंधिपरिपणप्रतिपादनेन[3] सत्यसंधः प्रीतिमुत्पादयितुमर्हति । एते ह्येवमुपगृहीताः सन्तः स्वाश्रयविनाशेनोपकारिण*माराधयिष्यन्ति । अविस्मृतमेतत् सत्यवतः स्मारयामः । एतेषां मध्ये केचिदरेः कोश[4]हस्तिभ्या†मार्थिनः केचिद्विषयेणेति । अलंकारत्रयं श्रीमता यत् प्रेषितं तदुपगतम् । अस्माभिर्लेखस्याशून्यार्थं किंचिदनुप्रेषितं तदुपगमनीयम् । वाचिकं ¶चाप्ततमात् सिद्धार्थका[5]च्छ्रोतव्यमिति । सखे भागुरायण कीदृशो लेख[6]ः ।

**भागुरायणः** । भद्र सिद्धार्थक कस्यायं लेखः ।

**सिद्धार्थकः** । अज्ज ण जाणामि ॥ आर्य न जानामि ।

**भागुरायणः** । धूर्त लेखो नीयते न च ज्ञायते कस्येति । सर्वं तावत् तिष्ठतु । वाचिकं त्वत्तः केन श्रोतव्यम् ।

**सिद्धार्थकः** । भयं नाटयन् । तुह्मेहिं—॥ युष्माभिः—

**भागुरायणः** । किमस्माभिः ।

**सिद्धार्थकः** । तुह्मेहिं गिहीदो—ण जाणामि—किं भणामि त्ति ॥ युष्माभिर्गृहीतो—न जानामि—किं भणामीति ।

**भागुरायणः** । सक्रोधम् । एष ज्ञास्यसि । भासुरक बहिर्नीत्वा तावत् ताड्यतां यावत् कथयति ।

---

१ उपानय M. अपनय T H. २ उद्घाट्य T. ३ परिपण (न) प्रोत्साहनेन M. T ४ दन्तिभ्याम् M. दण्डाभ्याम् T. दण्डेन H ५ अस्माच्छ्रो° T. ६ लेखार्थ M H.

* Read उपहारिणम् † Read हास्तिकाभ्याम् ¶ Read चाप्ततमादस्मात् सिद्धा° ।

**पुरुषः** । जं अज्जो आणवेदि । तेन सह निष्क्रम्य पुनः प्रविश्य। अज्ज इअं मुद्दालञ्छिदा पेडिआ तस्स ताडीअमाणस्स कक्खादो णिवडिदा ॥ यदार्य आज्ञापयति ।...आर्य इय मुद्रालाञ्छिता पेटिका तस्य ताड्यमानस्य कक्षाया निपतिता ।

**भागुरायणः** । विलोक्य । इयमपि राक्षसमुद्राङ्कितैव ।

**मलयकेतुः** । अयं लेखस्याशून्यार्थो भविष्यति । इमामपि मुद्रां परिपालयन्नुद्घाट्य दर्शय ।

भागुरायणस्तथा कृत्वा दर्शयति ।

**मलयकेतुः** । विलोक्य । अये तदिदमाभरणं यन्मया स्वशरीरादवतार्य राक्षसाय प्रेषितम् । व्यक्तम् । चन्द्रगुप्तस्यायं लेखः ।

**भागुरायणः** । एष निर्णीयते संशयः । भद्र पुनरपि ताड्यताम् ।

**पुरुषः** । जं अज्जो आणवेदि । निष्क्रम्य सिद्धार्थकेन सह पुनः प्रविश्य । एसो खु ताडीअमाणो कुमारस्य य्येव णिवेदेमि त्ति भणादि ॥ यदार्य आज्ञापयति ।... एष खलु ताड्यमानः कुमारायैव निवेदयामीति भणति ।

**मलयकेतुः** । तथा भवतु ।

**सिद्धार्थकः** । पादयोर्निपत्य । अभएण मे कुमारो पसादं करेदु ॥ अभयेन मे कुमारः प्रसाद करोतु ।

**मलयकेतुः** । भद्र अभयमेव परवतो जनस्य । निवेद्यताम् ।

**सिद्धार्थकः** । णिसामेदु कुमारो । अहं खु अमच्चरक्खसेण इमं लेहं देइअ चन्दउत्तासआसं पेसिदो ह्मि ॥ निशामयतु कुमारः । अहं खल्वमात्यराक्षसेनेमं लेखं दत्वा चन्द्रगुप्तसकाशं प्रेषितोऽस्मि ।

**मलयकेतुः** । वाचिकमिदानीं श्रोतुमिच्छामि ।

**सिद्धार्थकः** । कुमार [2]आदिट्ठो ह्मि अमच्चेण जहा एदे मह पिअवअस्सा पञ्च राआणो तुए सह पढमसमुप्पण्णसंधाणा । ते जहा कुलूदाहिवो चित्तवम्मा मलअणराहिवो सीहणादो कह्मीरदेसणाहो पुक्खरक्खो सिन्धुराओ सिन्धुसेणो पारसीआहिवदी मेहक्खो । एदेसु पढमभणिदा तिण्णि राआणो मलअकेदुणो विसअं इच्छन्ति अवरे

१ उद्देश्य H. २ संदिट्ठो M H.

हत्थिबलं कोसं अ । ता जहा चाणक्कं णिराकरिअ [1]महाराएण मह पीदी समुप्पादिदा तहा एदाणं वि [2]पढमपणिदो अत्थो पडिवादइदव्वो त्ति एत्तिओ वाआसंदेसो ॥ कुमार आदिष्टोऽस्म्यमात्येन यथैते मम प्रियवयस्याः पञ्च राजानस्त्वया सह प्रथमसमुत्पन्नसंधानाः । ते यथा कुलूताधिपश्चित्रवर्मा मलयनराधिपः सिंहनादः काश्मीरदेशनाथः पुष्कराक्षः सिन्धुराजः सिन्धुषेणः पारसीकाधिपतिर्मेघाक्षः । एतेषु प्रथमभणितास्त्रयो राजानो मलयकेतोर्विषयमिच्छन्त्यपरे हस्तिबलं कोशं च । तद्यथा चाणक्यं निराकृत्य महाराजेन मम प्रीतिः समुत्पादिता तथैतेषामपि प्रथमपणितोऽर्थः प्रतिपादयितव्य इत्येतावान् वाक्संदेशः ।

**मलयकेतुः** । स्वगतम् । कथं चित्रवर्मादयोऽपि मामभिद्रुह्यन्ति । सत्यम् अत एव तेषां राक्षसे निरतिशया प्रीतिः । प्रकाशम् । विजये । अमात्यं द्रष्टुमिच्छामि ।

**प्रतीहारी** । जं कुमारो आणवेदि । निष्क्रान्ता ॥ यत् कुमार आज्ञापयति ।

ततः प्रविशत्यासनस्थः स्वभवनगतः पुरुषेण सह सचिन्तो राक्षसः ।

**राक्षसः** । स्वगतम् । आपूर्णमस्मद्बलं चन्द्रगुप्तबलैरिति यत्सत्यं न मे मनसः परिशुद्धिरस्ति । कुतः

**साध्ये निश्चितमन्वयेन घटितं बिभ्रत् [4]स्वपक्षे स्थितिं**
**व्यावृत्तं च विपक्षतो भवति यत् तत् साधनं सिद्धये ।**
**यत् साध्यं स्वयमेव तुल्यमुभयोः पक्षे विरुद्धं च यत्**
**तस्याङ्गीकरणेन वादिन इव स्यात् स्वामिनो निग्रहः ॥ १० ॥**

अथ वा तैस्तैरपरागहेतुभिः प्राक्परिगृहीतोपजापैरापूर्णमिति न विकल्पयितुमर्हामि । प्रकाशम् । प्रियंवदक उच्यतामस्मद्वचनात् कुमारानुयायिनो राजानः । संप्रति दिने दिने प्रत्यासीदति कुसुमपुरम् । तत् परिकल्पितविभागैर्भवद्भिः प्रयाणे प्रयातव्यम् । कथमिति ।

**प्रस्थातव्यं पुरस्तात् * [5]खसशबरगणैर्मामनु व्यूढसैन्यैर्-**
**गान्धारैर्मध्ययाने [6]यवननृपतिभिः संविधेयः प्रयत्नः ।**
**पश्चात् तिष्ठन्तु वीराः शकनरतपयः †संभृताश्चेदहूणैः**
**कौलूताद्यश्च शिष्टः पथि परिवृणुयाद्राजलोकः कुमारम् ॥ ११ ॥**

---

१ महाभाएण in all but H (M P.) २ पढमभणिदो in all but H (P B). ३ अथ वा M T H. ४ सपक्षे T H. ५ मगध M T H. ६ सयवनपतिभिः in all but H (K ch) ७ चेदि M.H. चीण T

* Read खसशबरनृपैः † Read संभृताश्चैव हूणैः

**पुरुषः** । जं अमच्चो आणवेदि । निष्क्रान्तः ।। यदमात्य आज्ञापयति ।

प्रविश्य **प्रतीहारी** । जेदु अमच्चो । इच्छादि अमच्चं कुमारो पेक्खिदुं ।। जयत्वमात्यः । इच्छत्यमात्यं कुमारः प्रेक्षितुम् ।

**राक्षसः** । भद्रे मुहूर्तं तिष्ठ । कः कोऽत्र भोः ।

प्रविश्य **पुरुषः** । आणवेदु अमच्चो ।। आज्ञापयत्वमात्यः ।

**राक्षसः** । भद्र उच्यतां शकटदासः ।। परिधापिता वयमाभरणं कुमारेण तन्न युक्तमस्माभिरनलंकृतैः कुमारदर्शनमनुभावितुम् । अतो यत् तदलंकरणत्रयं क्रीतं तन्मध्यादेकं दीयतामिति ।

**पुरुषः** । जं अमच्चो आणवेदि ।। निष्क्रम्य पुनः प्रविश्य । अमच्च इदं अलंकरणं ।। यदमात्य आज्ञापयति । ...अमात्य इदमलंकरणम् ।

**राक्षसः** । आत्मानमलंकृत्योत्थाय च । भद्रे राजकुलगामिनं मार्गमादेशय ।

**प्रतीहारी** । एदु अमच्चो ।। एत्वमात्यः ।

**राक्षसः** । स्वगतम् । अधिकारपदं नाम निर्दोषस्यापि पुरुषस्य महदाशङ्कास्थानम् ।

भयं तावत् सेव्यादभिनिविशते सेवकजनं
ततः प्रत्यासन्नाद् भवति हृदये चैव निहितम् ।
ततोऽध्यारूढानां पदमसुजनद्वेषजननं
मतिः सोच्छ्रायाणां पतनमनुरूपं कलयति ॥ १२ ॥

परिक्रम्य **प्रतीहारी** । अमच्च अअं कुमारो चिट्ठदि । उपसप्पदु णं अमच्चो ।। अमात्य अयं कुमारस्तिष्ठति । उपसर्पत्वेनममात्यः ।

**राक्षसः** । विलोक्य । अयं कुमारो य एष

पादाग्रे दृशमवधाय [1]निश्चलाङ्गीं
शून्यत्वादपरिगृहीततद्विशेषाम् ।
वक्रेन्दुं वहति करेण दुर्वहाणां
कार्याणां कृतमिव गौरवेण नम्रम् ॥ १३ ॥

उपसृत्य । विजयतां कुमारः ।

**मलयकेतुः** । आर्य अभिवादये । इदमासनमास्यताम् ।

१ निश्चलन्तीं M H.

राक्षसस्तथा करोति[1]।

**मलयकेतुः** । आर्य चिर[2]मदर्शनेनार्यस्य वयमुद्विग्नाः ।

**राक्षसः** । कुमार प्रयाणे प्रतिविधानमनुतिष्ठता मया कुमारादुपालम्भोऽधिगतः ।

**मलयकेतुः** । आर्य प्रयाणे कथं प्रतिविहितमिति श्रोतुमिच्छामि ।

**राक्षसः** । कुमार एवमादिष्टाः कुमारानुयायिनो राजानः । प्रस्थातव्यमिति पूर्वोक्तं पठति ।

**मलयकेतुः** । स्वगतम् । य एव मद्विनाशेन चन्द्रगुप्तमाराधयितुमुद्यतास्त एव मां परिवृण्वन्ति । प्रकाशम् । आर्य अस्ति कश्चिद्यः कुसुमपुरं गच्छति तत आगच्छति वा ।

**राक्षसः** । कुमार अवसितमिदानी गतागतप्रयोजनम् । अल्पै[3]रहोभिर्वयमेव [4]गन्तास्यामः ।

**मलयकेतुः** । स्वगतम् । विज्ञायते । प्रकाशम् । यद्येवं ततः किमार्येणायं सलेखः पुरुषः प्रेषितः ।

**राक्षसः** । विलोक्य । अये सिद्धार्थक[5]: ।

**सिद्धार्थक[6]:** । णं विण्णवेमि ताडीअन्तेण मए– । इत्यर्धोक्तेऽधोमुखस्तिष्ठति ॥ ननु विज्ञापयामि ताड्यमानेन मया– ।

**मलयकेतुः** । भागुरायण स्वामिनः पुरस्ताद्भीतो लज्जितो वा नैष कथयिष्यति । स्वयमेवार्याय कथय ।

**भागुरायणः** । यदाज्ञापयति कुमारः । अमात्य एष कथयति । यथाहममात्येन लेखं दत्वा वाचिकं च संदिश्य चन्द्रगुप्तसकाशं प्रेषितः ।

**राक्षसः** । भद्र सिद्धार्थक अपि सत्यम् ।

**सिद्धार्थकः** । लज्जां नाटयन् । एवं[7]–ताडीअन्तेण मए–णिवेदिदं ॥ एवं–ताड्यमानेन मया– निवेदितम् ।

---

१ राक्ष० । कुमार किमर्थं वयमाहूताः । added after this H. २ चिरमदर्शनेन H. ३ पञ्चभि. H. ४ गन्तार. in all but H (B)ः ५ भद्र किमिदम् । added after this M T H ६ सिद्धा० सबाष्पं लज्जां नाटयन् । पसीदहु (पसीददु) अमच्चो (अमच्च) ताडीअन्तेण मए ण पारिदं अमच्चरहस्सं धारिदुं ॥ राक्ष० । भद्र कीदृशं रहस्यमिति न खल्ववगच्छामि । सिद्धा० विण्णवेमि ताडीअन्तेण मए ण पारिदं(अमच्चरहस्सं धारिदुं त्ति)॥MTH. ७ इमं(रहस्स)MH.

**राक्षसः** । अनृतमेतत् । ताड्यमानः पुरुषः किमिव न ब्रूयात् ।

**मलयकेतुः** । सखे भागुरायण दर्शय लेखम् । वाचिकमेष भृत्यः कथयिष्यति ।

**भागुरायणः** । अमात्य अयं लेखः ।

**राक्षसः** । अनुवाच्य । कुमार शत्रोः प्रयोग एषः ।

**मलयकेतुः** । लेखस्याशून्यार्थमार्येणेदमाभरणमनुप्रेषितम् । तत् कथं शत्रोः प्रयोगः स्यात् ।

**राक्षसः** । आभरणं निर्वर्ण्य । [1]कुमार नेतन्मयानुप्रेषितम् । कुमारेण मे प्रेषितं कस्मिंश्चित् परितोषस्थाने मया सिद्धार्थकाय दत्तम् ।

**भागुरायणः** । ईदृशस्याभरणविशेषस्य विशेषतः कुमारेण[2] प्रसादीकृतकृतस्यायं परित्यागभूमिः ।

**मलयकेतुः** । वाचिकमपि [3]सिद्धार्थकाच्छ्रोतव्यमिति लिखतमार्येण ।

**राक्षसः** । कुतो वाचिकम् । [4]लेख एवास्मदीयो न भवति ।

**मलयकेतुः** । इयं तर्हि कस्य मुद्रा ।

**राक्षसः** । कपटमुद्रामप्युत्पादयितु शक्नुवन्ति धूर्ताः ।

**भागुरायणः** । कुमार सम्यगमात्यो विज्ञापयति । भद्र केनायं लिखितो लेखः ।

सिद्धार्थको राक्षसस्य मुखमवलोक्य तूष्णीमधोमुखस्तिष्ठति ।

**भागुरायणः** । भद्र अलं पुनरात्मानं ताडयित्वा[5] । कथय ।

**सिद्धार्थकः** । अज्ज सअडदासेण ॥ आर्य शकटदासेन ।

**राक्षसः** । यदि शकटदासेन लिखितस्तर्हि मयैव लिखितः ।

**मलयकेतुः** । विजये शकटदासं द्रष्टुमिच्छामि ।

**प्रतीहारी** । जं कुमारो आणवेदि ॥ यत् कुमार आज्ञापयति ।

**भागुरायणः** । स्वगतम् । न खल्वनिश्चितार्थमार्यचाणक्यस्य प्रणिधयोऽभिधास्यन्ति । भवतु । एवम् । प्रकाशम् । कुमार न कदाचिदपि शकटदा-

---

१ कुमारेणैतन्मह्यमनुप्रेषितम । मयाप्येतत् कस्मिंश्चित् T. कुमार नैतन्मयानुप्रेषितम । कुमारेण मे (vl मह्यं ) दत्तमेतद्धि (कस्मिंश्चित्) M H. २ स्व(vl आत्म)गात्रादवतार्य added after this in all but H(P M). ३ अस्मात् T. आप्ततमात्सिद्धार्थकात् H. ४ कस्य वाचिकम् । inserted before this M T H. ५ ताडयितुम् T H.

सोऽमात्यस्याग्रतो लिखितं प्रतिपत्स्यते । अतो [1]लिखितान्तरमस्यानीयताम् । वर्णसंवाद एवैतद् विभावयिष्यति ।

**मलयकेतुः** । एवं क्रियताम् ।

**भागुरायणः** । कुमार मुद्रामप्यानयात्वियम् ।

**मलयकेतुः** । उभयमप्यानीयताम् ।

**प्रतीहारी** । जं कुमारो आणवेदि । निष्क्रम्य पुनः प्रविश्य । कुमार इदं सअडदासेण लिहिदं पत्तअं मुद्दा अ ॥ यत् कुमार आज्ञापयति ।...कुमार इदं तच्छकटदासेन लिखितं पत्रं मुद्रा च ।

**मलयकेतुः** । उभयमपि विलोक्य । संवदन्त्यक्षराणि ।

**राक्षसः** । स्वगतम् । संवदन्त्यक्षराणि । किं नु शकटदासेन

> **स्मृतं स्यात् पुत्रदाराणां विस्मृतस्वामिभक्तिना ।**
> **चलेष्वर्थेषु लुब्धेन न यशस्स्वनपायिषु ॥ १४ ॥**

अथ वा कः संदेहः ।

> **मुद्रा तस्य कराङ्गुलिप्रणयिनी सिद्धार्थकस्तत्सुहृत्**
> **तस्यैवापरलेख्यसूचितमिदं लेख्यं प्रयोगाश्रयम् ।**
> **सुव्यक्तं शकटेन भेदपटुभिः संधाय सार्धं परै-**
> **र्भर्तृस्नेहपराङ्मुखेन कृपणं प्राणार्थिना चेष्टितम् ॥ १५ ॥**

**मलयकेतुः** । विलोक्य । आर्य अलंकारत्रयं श्रीमता यत् प्रेषितं तदुपगतमित्यार्येण यल्लिखितं तन्मध्यात् किमिदमेकम् । निर्वर्ण्यात्मगतम् । कथम् । तातेन धृतपूर्वमिदमाभरणम् । प्रकाशम् । आर्य कुतोऽयमलंकारः ।

**राक्षसः** । क्रैयादाधिगतः ।

**मलयकेतुः** । विजये अपि प्रत्यभिजानासि भूषणमिदम् ।

**प्रतीहारी** । निर्वर्ण्य सबाष्पम् । कुमार कहं ण पच्चभिजाणामि । इदं खु सुगिहीदणामधेएण पव्वदीसरेण धारिदपुव्वं ॥ कुमार कथं न प्रत्यभिजानामि । इदं खलु सुगृहीतनामधेयेन पर्वतेश्वरेण धारितपूर्वम् ।

---

१ अन्यालिखितम् M. प्रतिलिखितम् T. २ प्रतीहारी । कुमार मुद्दा वि । T. प्रतीहारी । कुमार मुद्दं पि जाचेमि । H. ३ उभयमपि क्रियताम् M T H. ४ शकटदासस्तु (मम) मित्रमिति विसंवदन्त्यक्षराणि । in all but H (M). ५ वणिग्भ्य क्रयाद॰ in all but H(M).

**मलयकेतुः** । सबाष्पम् । हा तात

एतानि तानि [1]तव भूषणवल्लभस्य
गात्रोचितानि कुलभूषण भूषणानि
यैः शोभितोऽसि मुखचन्द्रकृतावभासो
नक्षत्रवानिव शरत्समयप्रदोषः ॥ १६ ॥

**राक्षसः** । स्वगतम् । कथम् । पर्वतेश्वरेण धृतपूर्वाणीत्याह । [2]व्यक्तमेतान्येव चाणक्यप्रयुक्तेन वणिजास्मासु विक्रीतानि ।

३**मलयकेतुः** । आर्य तातेन धृतपूर्वाणामाभरणानां विशेषतश्चन्द्रगुप्तहस्तगतानां [3]क्रयादधिगमः कथं युज्यते । अथ वा युज्यत एवैतत् ।

चन्द्रगुप्तस्य विक्रेतुराधिकं लाभमिच्छतः ।
कल्पिता मूल्यमेतेषां क्रूरेण भवता वयम् ॥ १७ ॥

**राक्षसः** । स्वगतम् । अहो सुश्लिष्टो [4]दूषणप्रयोगः । कुतः ।

लेखोऽयं मम नेति नोत्तरपदं मुद्रा मदीया यतः
सौहार्दं शकटेन खण्डितमिति श्रद्धेयमेतत् कथम् ।
मौर्ये भूषणविक्रयं नरपतौ को नाम संभावयेत्
तस्मात् संप्रतिपत्तिरेव हि [5]भवेदग्राम्यमत्रोत्तरम् ॥१८॥

**मलयकेतुः** । एतदार्यं पृच्छामि— ।

**राक्षसः** । कुमार य आर्यस्तं पृच्छ । वयमिदानीमनार्याः संवृत्ताः ।

३**मलयकेतुः** ।

मौर्योऽसौ स्वामिपुत्रः *परिचरणपरो मित्रपुत्रस्तवाहं
दाता सोऽर्थस्य तुभ्यं [6]स्वमतमनुगतस्त्वं तु मह्यं ददासि ।
दास्यं सत्कारपूर्वं ननु सचिवपदं तत्र ते स्वाम्यमत्र
स्वार्थे कस्मिन् समीहा पुनरधिकतरे त्वामनार्यं करोति ॥१९॥

**राक्षसः** । कुमार एवम् । [7]अभियुक्तव्याहारेणैव निर्णयो दत्तः । मौर्योऽसौ स्वामिपुत्र इत्यादि युष्मदस्मदोर्व्यत्ययेन पठति ।

---

१ गुणवल्लभ वल्लभानि H. २ व्यक्तमेवास्य भूषणानि । प्रकाशम् । एतान्यपि चाणक्यप्रयुक्तेन वणिग्जनेनास्मासु विक्रीतानि । T. प्रकाशम् । व्यक्तमेतान्यपि तेन चाणक्य० M. ३ वणिग्विक्रय इति न युज्यते T. ४ भूषण H. अभूदेष M, अभूच्छत्रु T. ५ वरं न ग्राम्य० M T H ६ सतत H. ७ अभियुक्तव्याहारिणा M H. अयुक्तव्याहारिणा T

* Read परपरिचरणो

मलयकेतुः । लेखमलंकरणस्थगिकां च निर्दिश्य । इदमिदानीं किम् ।

राक्षसः । सबाष्पम् । विधेर्विलसितम् ।

भृत्यत्वे परिभूतिधामनि सति स्नेहात् प्रभूणां सतां
पुत्रेभ्यः कृतवेदिनां कृतधियां येषामभिन्ना वयम् ।
ते लोकस्य परीक्षकाः क्षितिभृतः पापेन येन क्षता-
स्तस्येदं विपुलं विधेर्विलसितं पुंसां प्रयत्नाच्छिदः ॥२०॥

मलयकेतुः । सक्रोधम् । किमद्यापि निह्नूयत एव । विधेर्विलसितमिदं न लोभस्य । अनार्य—

कन्यां तीव्रविषप्रयोगविषमां कृत्वा कृतघ्न त्वया
विश्रम्भप्रवणः पुरा मम पिता नीतः कथाशेषताम् ।
संप्रत्याहितगौरवेण भवता मन्त्राधिकारे रिपौ[1]
प्रारब्धाः [2]पुनराममांसवदहो विक्रेतुमेते वयम् ॥२१॥

राक्षसः । स्वगतम् । अयमपरो गण्डस्योपरि विस्फोटः । प्रकाशं कर्णौ पिधाय । शान्तं पापम् । [3]अपापोऽहं पर्वतेश्वरे ।

मलयकेतुः । केन तर्हि व्यापादितस्तातः ।

राक्षसः । दैवमत्र प्रष्टव्यम् ।

मलयकेतुः । दैवमत्र प्रष्टव्यम् । न क्षपणको जीवसिद्धिः ।

राक्षसः । स्वगतम् । कथम् । जीवसिद्धिरपि चाणक्यप्रयुक्तः । हन्त रिपुभिर्मे हृदयमपि स्वीकृतम् ।

मलयकेतुः । सक्रोधम् । भासुरक आज्ञाप्यतां सेनापतिः शिखरसेनः । य एते राक्षसेन सह सुहृत्तामुत्पाद्यास्मच्छरीरद्रोहेण चन्द्रगुप्तमाराधयितुमुद्यताः पञ्च राजानः कौलूतश्चित्रवर्मा मलयनरपतिः सिंहनादः काश्मीरः पुष्कराक्षः सिन्धुराजः सिन्धुषेणः पारसीकाधिराजो मेघाक्ष इत्येतेषु त्रयः प्रथमे मदीयां भूमिं कामयन्ते । ते गम्भीरं श्वभ्रमभिनीय पांशुभिः पूर्यन्ताम् । इतरौ तु हस्तिबलकामौ हस्तिनैव घात्येतामिति ।

पुरुषः । जं कुमारो आणवेदि । निष्क्रान्तः ॥यत् कुमार आज्ञापयति... ।

---

१ रिपोः H. २ प्रलयाय मांस० T. प्रणयाय मांस० M ३ नाहं पर्वतेश्वरे । विषकन्यां प्रयुक्तवान् । T. प्रणिधिः M T.

मलयकेतुः । राक्षस नाहं विश्रम्भघाती राक्षसः । मलयकेतुः खल्वहम् । तद् गच्छ । समाश्रय सर्वात्मना चन्द्रगुप्तम् ।

विष्णुगुप्तं च मौर्यं च सममप्यागतौ त्वया ।
उन्मूलयितुमीशोऽहं त्रिवर्गमिव दुर्नयः ॥२२॥

[1]भागुरायण कृतं कालहरणेन । साम्प्रतमेव [2]कुसुमपुरमवरोधनाय प्रतिष्ठन्तामस्मद्बलानि ।

गौडीनां लोध्रधूलीपरिमलधवलान् धूम्रयन्तः कपोलान्
क्लिश्नन्तः कार्ष्णमानं भ्रमरकुलरुचः कुञ्चितस्यालकस्य ।
पांशुस्तम्बा बलानां तुरगखुरपुटक्षोदलब्धात्मलाभाः
शत्रूणामुत्तमाङ्गे गजमदसलिलच्छिन्नमूलाः पतन्तु ॥२३॥

इति भागुरायणेन सह सपरिजनो निष्क्रान्तो मलयकेतुः ।

राक्षसः । सावेगम् । हा धिक् । घातितास्चित्रवर्मादयस्तपस्विनः । कथम् । सुहृद्विनाशाय राक्षसश्चेष्टते न रिपुविनाशाय । किमिदानीं करवाणि ३मन्दभाग्यः ।

किं गच्छामि तपोवनं न तपसा शाम्येत् सवैरं मनः
किं भर्तॄननुयामि जीवति रिपौ स्त्रीणामियं योग्यता ।
किं वा खड्गसखः पताम्यरिबले [3]नैतच्च युक्तं भवे-
च्चेतश्चन्दनदासमोक्षरभसं रुन्ध्यात् [4]कृतघ्नं न चेत् ॥ २४ ॥

निष्क्रान्तः ।

इति कूटलेखो नाम पञ्चमोऽङ्कः ।

१ भागु० । कुमार कृतं० M. T. २ कुसुमपुरोपरोधाय M. T. ३ नेदं न M. नैतन्न H. ४ कृतज्ञं H.

## कपटपाशो नाम
## षष्ठोऽङ्कः ।

तत प्रविशत्यलंकृतः सहर्षः सिद्धार्थकः ।

**सिद्धार्थकः ।**

जअदि जलदणीलो केसवो केसिघादी
जअदि अ जणदिट्ठीचन्दमा[1] चन्दउत्तो ।
जअदि अ जअकज्जं[2] जाव काऊण सेण्णं[3]
पडिहदपरपक्खा[4] अज्जचाणक्कणीदी ॥१॥

जाव चिरस्स कालस्स पिअवअस्सं समिद्धत्थअं पेक्खामि[5]। परिक्रम्यावलोक्य च । एसो मे पिअवअस्सो समिद्धत्थओ इदो य्येव आअच्छदि । जाव णं उवसप्पामि ॥

जयति जलदनीलः केशवः केशिघाती
जयति च जनदृष्टिचन्द्रमाश्चन्द्रगुप्तः ।
जयति च जयकार्यं यावत् कृत्वा सर्वं
प्रतिहतपरपक्षार्यचाणक्यनीतिः ।

यावच्चिरस्य कालस्य प्रियवयस्य समृद्धार्थकं प्रेक्षे । एष मे प्रियवयस्यः समृद्धार्थक इत एवागच्छति । यावदेनमुपसर्पामि ।

ततः प्रविशति समृद्धार्थकः ।

**समृद्धार्थकः ।**

[6]सन्तावेन्ता आवाणएसु [7]गेहुस्सवेसु [8]तहणिच्चं ।
[9]हिअअट्ठिआण [10]विहवा विरहे मित्ताण दूमेन्ति ॥

सुदं मए मलअकेदुकडआदो पिअवअस्सो सिद्धत्थओ आअदो त्ति । ता जाव णं अण्णेसामि । परिक्रम्य विलोक्य च । एसो सिद्धत्थओ ॥

संतापयन्त आपानकेषु गेहोत्सवेषु तथा नित्यम् ।
हृदयस्थितानां विभवा विरहे मित्राणां दुनन्ति ॥

श्रुत मया मलयकेतुकटकात् प्रियवयस्यः सिद्धार्थक आगत इति । तद्यावदेनमन्विष्यामि । एष सिद्धार्थकः ।

**सिद्धार्थकः ।** [11][12]उपसृत्य । अवि सुहं पिअवअस्सस्स ॥ अपि सुखं प्रियवयस्यस्य ।

---

१ चन्दिमा H. २ जअणकज्जं M, जअणसज्जं M H. ३ सेण्णं M H, ४ पडिवक्खा M H. ५ अण्णेसामि H. ६ संभावेन्ता आवाणएसु M.H. संदावे तारेसाणं T ७ महूसवेसु M. गेहूसवे H ८ रुआवेन्ता M H. सुहाअत्ताणं T. ९ ट्ठिआ विअ H १० विहवा...दुम्मणा अन्ते M, विहवा...दूणान्दि T. विरहे मित्तं मित्ताइं दूमेन्ति H. ११ पसृत्य । अपि सुंह पिअवअस्सस्स added M H. १२ विलोक्य । कधं । पिअवअस्सो समिद्धत्थओ inserted M T H.

उभावन्योन्यमालिङ्गतः ।

**समृद्धार्थकः** । वअस्स कुदो मे सुहं जेण तुमं चिरपच्चागदो वि अज्ज ण मे गेहं आअच्छसि ॥ वयस्य कुतो मे सुखं येन त्वं चिरप्रत्यागतोऽप्यद्य न मे गेहमागच्छसि ।

**सिद्धार्थकः** । पसीददु वअस्सो । दिट्ठमेत्तो ज्जेव अज्जचाणक्केण आणत्तो ह्मि । सिद्धत्थअ गच्छ । एदं पिअं[1] देवस्स चन्दसिरिणो णिवेदेहि त्ति । तदो तस्स तं णिवेदिअ एवं अणुभूदपत्थिवप्पसादो अहं पिअवअस्सं पेक्खिदुं तुह ज्जेव गेहं चलिदो ह्मि ॥ प्रसीदतु वयस्यः । दृष्टमात्र एवार्यचाणक्येनाज्ञप्तोऽस्मि । सिद्धार्थक गच्छ । एतत् प्रियं देवाय श्रीचन्द्राय निवेदयेति । ततस्तस्मै तन्निवेद्यैवमनुभूतपार्थिवप्रसादोऽहं प्रियवयस्यं प्रेक्षितुं तवैव गेहं चलितोऽस्मि ।

**समृद्धार्थकः** । वअस्स जदि मे सुणिदव्वं भोदि तदो कहेहि किं तं पिअं देवस्स चन्दसिरिणो णिवेदिदं ॥ वयस्य यदि मे श्रोतव्यं ततः कथय किं तत् प्रियं देवाय श्रीचन्द्राय निवेदितम् ।

**सिद्धार्थकः** । वअस्स किं तुह वि अमुणिदव्वं अत्थि । ता णिसामेहि । अत्थि दाव अज्ज चाणक्कणीदिमोहिदमदिणा मलअकेदुहदएण णिक्का[2]सिअ रक्खसं हदा चित्तवम्मप्पमुहा पहाणा पञ्च पत्थिवा । तदो असमिक्खकारी एसो दुराआरो त्ति उज्झिअ मलअकेदुकडअं[3] कुसलदाए[4] भआविलोलसेणिअ[5]परिवारा सकं सकं विसअं अभिप्पत्थिदा[6] पत्थिवा । तदो भद्दभडपुरुदत्तडिङ्गरादबलउत्तराअसेणभाउराअणरोहिदक्खविजअवम्मप्पमुहेहिं* गिहिदो मलयकेदू ॥ वयस्य किं तवाप्यश्रोतव्यमस्ति । तस्मान्निशामय । अस्ति तावदार्यचाणक्यनीतिमोहितमतिना मलयकेतुहतकेन निष्कास्य राक्षसं हताश्चित्रवर्मप्रमुखाः प्रधानाः पञ्च पार्थिवाः । ततोऽसमीक्ष्यकार्येष दुराचार इत्युज्झित्वा मलयकेतुकटकभूमिं कुशलतायै भयविलोलसैनिकपरिवाराः स्वकं स्वकं विषयमभिप्रस्थिताः पार्थिवाः । ततो

---

१ वुत्तन्तं M H. पिओदन्तं T. २ णिराकरिअ M H. ३ कडअभूमिं M, हदअभूमिं T. हदअं H. ४ गिअभूमिकुसलदाए M अभूमिं कुसलदाए H, ५ सेससेणिअ परिवारेसु T. सेण्णतणूकदपरिवारेसु M. ६ °पत्थिदेसु पत्थिवेसु णिव्विण्णाहिअएसु सअलसामन्तेसु भद्द° T

* Read विजअवम्मेहिं.

भद्रभटपुरुदत्तडिङ्गरातबलगुप्तराजसेनभागुरायणरोहिताक्षविजयवर्मप्रमुखैः संयम्य गृहीतो मलयकेतुः ।

**समृद्धार्थकः** । वअस्स भद्दभडप्पमुहा किल देवस्स चन्दसिरिणो अवरत्ता मलअकेदुं समस्सिदा त्ति लोए मन्तीअदि । ता किं कुकविकिदणाडअस्स विअ अण्णं मुहे अण्णं णिव्वहणे ॥ वयस्य भद्रभटप्रमुखाः किल देवाच्छ्रीचन्द्रादपरक्ता मलयकेतु समाश्रिता इति लोके मन्त्र्यते । तत् किं कुकविकृतनाटकस्येवान्यन्मुखेऽन्यन्निर्वहणे ।

**सिद्धार्थकः** । वअस्स [1]देवणदीए* विअ अमुणिदगदीए णमो अज्जचाणक्कणीदीए ॥ वयस्य देवनद्या इवाज्ञातगत्यै नम आर्यचाणक्यनीत्यै ।

**समृद्धार्थकः** । तदो तदो ॥ ततस्ततः ।

**सिद्धार्थकः** । तदो पभूदसारसाहणसमेदेण इदो णिक्कमिअ अज्जचाणक्केण पडिवण्णं [2]अराअलोअं असेसं मेच्छ[3]बलं ॥ ततः प्रभूतसारसाधनसमेतेनेतो निष्क्रम्यार्यचाणक्येन प्रतिपन्नमराजलोकमशेषं म्लेच्छबलम् ।

**समृद्धार्थकः** । वअस्स कहिं तं ॥ वअस्य कुत्र तत् ।

**सिद्धार्थकः** । जहिं एदे ।

अदिसअगरुएणं दाणदप्पेण दन्ती
सजलजलदलीलं[4] उव्वहन्ता णदन्ति ।
कसपहरभएण जाअकम्पुत्तरङ्गा
गिहिदजअणसज्जा[5] संपअन्ते तुरङ्गा ॥३॥

यत्रैते

अतिशयगुरुणा दानदर्पेण दन्तिनः सजलजलदलीलामुद्वहन्तो नदन्ति ।
कशाप्रहारभयेण जातकम्पोत्तराङ्गा गृहीतजयनसज्जाः संप्लवन्ते तुरङ्गाः ॥

**समृद्धार्थकः** । वअस्स एदं दाव चिट्ठदु । तहा सव्वलोअपच्चक्खं उज्झिदाहिआरो चिट्ठिअ अज्जचाणक्को किं पुणो वि तं ज्जेव मन्तिपदं आरूढो ॥ वयस्य एतत् तावत् तिष्ठतु । तथा सर्वलोकप्रत्यक्षमुज्झिताधिकारः स्थित्वार्यचाणक्यः किं पुनरपि तदेव मन्त्रिपदमारूढः ।

**सिद्धार्थकः** । अदिमुद्धो दाणिं तुमं †जो अमच्चरक्खसेण वि अणवगाहिदपुव्वं अज्जचाणक्कबुद्धिं अवगाहिदुं इच्छसि ॥ अतिमुग्ध इदानीं

---

१ देव्वगदीए M T. २ अराअलोअं M. सराअकं H. सअलराअलोअसुहिअं I.
३ राअबलं H. ४ लीलं उब्भमन्ता I H. ५ सद्दा M I H
* Read णिअदीए. † Omit जो

त्वं योऽमात्यराक्षसेनाप्यनवगाहितपूर्वामार्यचाणक्यबुद्धिमवगाहितुमिच्छसि ।

**समृद्धार्थकः** । वअस्स अमच्चरक्खसो दाणिं कहिं ॥ वयस्य अमात्यराक्षस इदानीं कुत्र ।

**सिद्धार्थकः** । सो खु तस्सिं[1] एव्व काले मलयकेदुकडआदो णिक्कमिअ उदुम्बरणामहेएण चरेण अणुसरीअन्तो इदं पाडलिउत्तं आअदो त्ति अज्जचाणक्कस्स णिवेदिदं ॥ स खलु तस्मिन्नेव काले मलयकेतुकटकान्निष्क्रम्योदुम्बरनामधेयेन चरेणानुस्रियमाण इदं पाटलिपुत्रमागत इत्यार्यचाणक्यस्य निवेदितम् ।

**समृद्धार्थकः** । वअस्स तहा णाम अमच्चरक्खसो णन्दरज्जपच्चाणअणे किदव्ववसाओ णिक्कमिअ संपदं अकिदत्थो कधं इमं ज्जेव पाडलिउत्तं आअदो ॥ वयस्य तथा नामामात्यराक्षसो नन्दराज्यप्रत्यानयने कृतव्यवसायो निष्क्रम्य सांप्रतमकृतार्थः कथमिदमेव पाटलिपुत्रमागतः ।

**सिद्धार्थकः** । वअस्य तक्केमि चन्दणदासस्स सिणेहेण त्ति ॥ वयस्य तर्कयामि चन्दनदासस्य स्नेहेनेति ।

**समृद्धार्थकः** । वअस्य अध चन्दणदासस्स मोक्खं विअ पेक्खसि[2] ॥ वअस्य अथ चन्दनदासस्य मोक्षमिव प्रेक्षसे ।

**सिद्धार्थकः** । कुदो से अधण्णस्स मोक्खो । सो खु संपदं अज्जचाणक्कस्स आणत्तीए दुवेहिं अह्मेहिं वज्झट्ठाणं पवेसिअ वावादइदव्वो ॥ कुतोऽस्याधन्यस्य मोक्षः । स खलु साम्प्रतमार्यचाणक्यस्याज्ञप्त्या द्वाभ्यामावाभ्यां वध्यस्थानं प्रवेश्य व्यापादयितव्यः ।

**समृद्धार्थकः** । सक्रोधम् । किं अज्जचाणक्कस्स घादअजणो णत्थि जेण अह्मे इदिसे[3] णिसंसे कम्मे णिओएदि ॥ किमार्यचाणक्यस्य घातकजनो नास्ति येनावामीदृशे नृशंसे कर्मणि नियोजयति ।

**सिद्धार्थकः** । वअस्स को जीवलोए जीविदुकामो अज्जचाणक्कस्स आणत्तिं पडिऊलेदि । ता एहि । चण्डालवेसधारिणो भविअ चन्दणदासं वज्झट्ठाणं णआम । निष्क्रान्तौ ॥ वयस्य को जीवलोके जीवितुकाम आर्यचाणक्यस्याज्ञप्तिं प्रतिकूलयति । तदेहि । चण्डालवेषधारिणौ भूत्वा चन्दनदासं वध्यस्थानं नयावः ।

इति प्रवेशकः ।

---

१ तस्सि पलअकोलाहले वट्टमाणे M, तस्सिं ( vl. तहिं ) भअविलोले वत्तमाणे T H. २ पेक्खामि M.T. ३ ईरिसेसु णिसंसेसु (णिओएसु) T H.

३६ ततः प्रविशति रज्जुहस्तः पुरुषः

**पुरुषः**

**छग्गुणसंजोअदिढा उवाअपरिवाडिघडिदपासमुही ।**
**चाणक्कणीदिरज्जू [1]रिउसंजमणुज्जआ जअदि ॥ ४ ॥**

परिक्रम्यावलोक्य च । एसो सो अज्जचाणक्कस्स उदुम्बरेण चरेण कहिदो पदेसो जहिं मए अज्जचाणक्काणत्तीए अमच्चरक्खसो पेक्खिदव्वो । विलोक्य । कहं एसो खु अमच्चरक्खसो किदावगुण्ठणो इदो य्येव आअच्छदि । ता जाव इमेहिं जिण्णुज्जाणपादवेहिं अन्तरिदसरीरो पेक्खामि कहिं आसणपरिग्गह करेदि त्ति । परिक्रम्य स्थितः ।।

(३ at line "दव्वो")

६ षड्गुणसंयोगदृढोपायपरिपाटिघटितपाशमुखी ।
चाणक्यनीतिरज्जू रिपुसयमनोद्यता जयति ॥

एष स आर्यचाणक्यायोदुम्बरेण चरेण कथितः प्रदेशो यत्र मयार्यचाणक्या-
९ज्ञप्त्यामात्यराक्षसः प्रेक्षितव्यः ।...कथमेष खल्वमात्यराक्षसः कृतावगुण्ठन इत
एवागच्छति । तद्यावदेभिर्जीर्णोद्यानपादपैरन्तरितशरीरः प्रेक्षे कुत्रासनपरिग्रह
करोतीति ।

१२ ततः प्रविशति यथानिर्दिष्टः सशस्त्रो राक्षसः ।

**राक्षसः** । सास्रम् । कष्टं भोः कष्टम् ।

**उच्छिन्नाश्रयकातरेव कुलटा गोत्रान्तरं श्रीर्गता**
**तामेवानुगता गतानुगतिकास्त्यक्तानुरागाः प्रजाः ।**
**आप्तैरप्यनवाप्तपौरुषफलैः कार्यस्य धूरुज्झिता**
**किं कुर्वन्त्वथ वोत्तमाङ्गरहितैर्नाङ्गैश्चिरं[2] स्थीयते ॥ ५ ॥**

अपि च

**पतिं त्यक्त्वा देवं भुवनपतिमुच्चैरभिजनं**
**गता [3]शीघ्रेण श्रीर्वृषलमविनीतेव वृषली ।**
**स्थिरीभूता चास्मिन् किमिह करवाम स्थिरमपि**
**प्रयत्नं नो येषां विफलयति दैवं द्विषदिव ॥ ६ ॥**

१ संजमणुज्जुआ H. २ °नागैश्चिरं M. अ T. ३ छिद्रेण श्री. M T. सा श्रीः शीघ्रं H.

मया हि

देवे गते दिवम[1]तर्कितमृत्युयोगे
शैलेश्वरं समधिकृत्य कृतः प्रयत्नः ।
तस्मिन् हते तनयमस्य तथाप्यसिद्धि-
र्दैवं हि नन्दकुलशत्रुरसौ न विप्रः ॥७॥

अहो विवेकशून्यता *म्लेच्छस्य [2]मलयकेतोः । कुतः ।

यो नष्टानपि [3]जीवनाशमधुना शुश्रूषते स्वामिन-
स्तेषां वैरिभिरक्षतः कथमसौ संधास्यते राक्षसः ।
इत्थं †वस्तुविवेकमूढमतिना म्लेच्छेन नालोचितं
दैवेनोपहतस्य बुद्धिरथ वा [4]सर्वं विपर्यस्यति ॥ ८ ॥

तदिदानीमपि तावदरातिहस्तगतो विनश्येन्न तु राक्षसश्चन्द्रगुप्तेन सह संदधीत । कुतः [5]कामममसत्यसंध इति [6]परमयशो न शत्रु-[7]वञ्चनापरिभूत इति । समन्तादवलोक्य सास्रम् । एतास्तावद् [8]देवचङ्क्रमण-पवित्रीकृताः कुसुमपुरभूमयः ।

इह हि

शार्ङ्गज्याकृष्टिमुक्तप्रशिथिलकविकाप्रग्रहेणात्र देशे
देवेनाकारि [9]पूर्वं प्रजवितुरगं बाणमोक्षश्चलेषु ।
अस्यामुद्यानराजौ स्थितमिह कथितं राजभिस्तैर्विनेत्थं
संप्रत्यालोकयमानाः कुसुमपुरभुवो भूयसा दुःखयन्ति ॥९॥

तत् क्व नु गच्छामि मन्दभाग्यः । विलोक्य । भवतु । दृष्टमेतज्जीर्णोद्यानम् । अत्र प्रविश्य कुतश्चिच्चन्दनदासस्य प्रवृत्तिमुपलप्स्ये । अल-क्षितनिपाताः पुरुषाणां समविषमदशापरिणतयो भवन्ति । कुतः ।

पौरैरङ्गुलिभिर्नवेन्दुवदहं निर्दिश्यमानः शनै-
र्यो राजेव पुरा पुरान्निरगमं राज्ञां सहस्रैर्वृतः ।
भूयः संप्रति सोऽहमेव नगरे तत्रैव [10]वन्ध्यश्रमा
जीर्णोद्यानकमेष तस्कर इव त्रासाद्विशामि द्रुतम् ॥ १० ॥

---

१ अतद्विध in all but H (N). २ मलयकेतोः omitted T H. ३ बीजनाशम् T. ४ पूर्वं M. ५ कामम् M T H. ६ वरम् in all but T (M N). ७ वचन M. ८ देव (स्य) पादचङ्क्रमण ( परिचय ) पवित्रीकृततला M T H. ९ चित्रं M T H. १० वध्यैः समो H.

* Omit म्लेच्छस्य † Read तावदवस्तुमूढ०

अथ वा येषां प्रसादादिदमासीत् त एव न सन्ति । नाट्येन प्रविश्याव-
लोक्य च । अहो जीर्णोद्यानस्यारमणीयता । अत्र हि

विपर्यस्तं सौधं कुलमिव महारम्भरचनं
सरः शुष्कं साधोर्हृदयमिव नाशेन [1]सुहृदाम् ।
फलैर्हीना वृक्षा विगुणविधियोगादिव नया-
स्तृणैश्छिन्ना भूमिर्मतिरिव [2]कुनीतैरविदुषः ॥ ११ ॥

अपि चात्र

क्षताङ्गीनां तीक्ष्णैः परशुभिरुदग्रैः[3]क्षितिरुहां
रुजा कूजन्तीनामविरतकपोतोपरुदितैः ।
स्वनिर्मोकच्छेदैः परिचितपरिक्लेशकृपया
श्वसन्तः शाखानां व्रणमिव निबध्नन्ति फणिनः ॥१२॥

एते च तपस्विनः

अन्तः शरीरपरिशोषमुपाश्रयन्तः[4]
[5]कीटक्षतिं शुचामिवातिगुरुं वहन्तः ।
छायावियोगमलिना व्यसने निमग्ना
वृक्षाः श्मशानमुपगन्तुमिव प्रवृत्ताः ॥१३॥

यावदस्मिन् विषमदशापरिणामसुलभे भिन्नाशिलातले मुहूर्तमुपविशामि ।
उपविश्याकर्ण्य च । अये किमयमाकस्मिकः *शङ्खपटहविमिश्रः [6]शब्दः
श्रूयते ।

[7]प्रमथ्नञ्छ्रोतॄणां श्रुतिपथमसारं गुरुतया
बहुत्वात् प्रासादैः सपदि परिपीतोज्झित इव ।
असौ नान्दीनादः पटुपटहशङ्खध्वनियुतो
दिशां द्रष्टुं दैर्घ्यं प्रसरति सकौतूहल इव ॥१४॥

विचिन्त्य । ज्ञातम् । एष हि मलयकेतुसंयमनसंजातं राजकुलस्य ( इत्य-
र्धोक्ते सासूयम् ) [8]परितोषं पिशुनयति । सबाष्पम् । कष्टम् ।

---

१ सुहृद. M H २ कुनीतैव विदुषः H. ३ उदग्रक्रमभृतां H. ४ उदग्र यन्तः T. उदीरयन्तः M. ५ कीटक्षतिस्रुतिभिरास्रमिवोद्वमन्तः T. ६ नान्दीनादः M T H. ७ प्रकुर्वन् M. प्रमृद्नन् T H. ८ मौर्यकुलस्य inserted M T H.

* Omit शङ्खपटहविमिश्रः

श्राविताेऽस्मि श्रियं शत्रोरभिनीय च दर्शितः ।
अनुभावयितुं मन्ये यत्नः संप्रति मां विधेः ॥१५॥

**पुरुषः** । स्वगतम् । आसीणो अअं । जाव अज्जचाणक्कादेसं संपादेमि । राक्षसमपश्यन्निव तस्याग्रतो रज्जुपाशेनात्मानमुद्बध्नाति ॥ आसीनोऽयम् । यावदार्यचाणक्यादेशं संपादयामि ।

**राक्षसः** । विलोक्य । कथम् । अयमात्मानमुद्बध्नाति । नूनमहमिव दुःखितस्तपस्वी । भवतु । पृच्छाम्येनम् । उपसृत्य । भद्र किमिदमनुष्ठीयते ।

**पुरुषः** । सबाष्पम् । अज्ज जं पिअजणविणासदुक्खिदो अह्मारिसो मन्दभग्गो अणुचिट्ठदि ॥ आर्य यत् प्रियजनविनाशदुःखितोऽस्मादृशो मन्दभाग्योऽनुतिष्ठति ।

**राक्षसः** । स्वगतम् । प्रथममेव मया ज्ञातं नूनमहमिव दुःखितस्तपस्वीति । प्रकाशम् । व्यसनसब्रह्मचारिन् यदि न रहस्यं नातिगुरु वा ततः श्रोतुमिच्छामि ।

**पुरुषः** । अज्ज ण रहस्सं नादिगरुअं वा । किंदु ण सक्कणोमि पिअवअस्सविणासदुक्खिदो मरणस्स कालहरणं कादुं ॥ आर्य न रहस्यं नातिगुरुकं वा । किं तु न शक्नोमि प्रियवयस्यविनाशदुःखितो मरणस्य कालहरणं कर्तुम् ।

**राक्षसः** । निःश्वस्यात्मगतम् । एते सुहृद्व्यसनेषु परवदुदासीनाः प्रत्यादिश्यामहे वयमनेन । प्रकाशम् । यदि न रहस्यं नातिगुरु वा श्रोतुमिच्छामि ।

**पुरुषः** । अहो णिब्बन्धो अज्जस्स । एँसो णिवेदेमि । अत्थि दाव एत्थ णअरे मणिआरसेट्ठी जिह्णुदासो णाम ॥ अहो निर्बन्ध आर्यस्य । एष निवेदयामि । अस्ति तावदत्र नगरे मणिकारश्रेष्ठी जिष्णुदासो नाम ।

**राक्षसः** । स्वगतम् । अस्ति जिष्णुदासश्चन्दनदासस्य परमसुहृत् ।

**पुरुषः** । सो मम पिअवअस्सो ॥ स मम प्रियवयस्यः ।

**राक्षसः** । सहर्षमात्मगतम् । अये प्रियवयस्य इत्याह । संनिकृष्टः संबन्धः । ज्ञास्यति चन्दनदासस्य वृत्तान्तम् ।

१ अनुबध्नाति H. २ पिअवअस्स M T H. ३ दुक्खिदाहिअओ एत्तिअमेत्तं वि M T H. ४ खा गदी inserted before this M T H.

**पुरुषः** । संपदं दीणजणविइण्णविहवो जलणं पवेसिदुकामो णअरादो णिक्कन्तो । अहं वि जाव तस्स असुणिदव्वं ण सुणामि ताव अत्ताणं उब्बन्धिअ वावादइदुं इमं जिण्णुज्जाणं आअदो ॥ सांप्रतं दीनजनवितीर्णविभवो ज्वलनं प्रवेष्टुकामो नगरान्निर्गतः । अहमपि यावत् तस्याश्रोतव्यं न शृणोमि तावदात्मानमुद्बध्य व्यापादयितुमिदं जीर्णोद्यानमागतः ।

**राक्षसः** । अग्निप्रवेशे सुहृदस्ते को हेतुः ।

**किमौषधपथातिगैरुपहतो महाव्याधिभिः**

**पुरुषः** । ण हि ॥ न हि ।

**राक्षसः** । **किमग्निविषकल्पया नरपतेर्निरस्तः क्रुधा ।**

**पुरुषः** । एदं वि णत्थि । चन्दउत्तस्स जणवदे ण णिसंसा पडिवत्ती ॥ एतदपि नास्ति । चन्द्रगुप्तस्य जनपदे न नृशंसा प्रतिपत्तिः ।

**राक्षसः** । **अलभ्यमनुरक्तवान्[2] किमयमन्यनारीजनं**

**पुरुषः** । कर्णौ पिधाय । सन्तं पावं । अभूमी खु एसो अविणअस्स ॥ शान्तं पापम् । अभूमिः खल्वेषोऽविनयस्य ।

**राक्षसः** ।

**किमस्य भवतो यथा सुहृद एव नाशोऽवशः ॥ १६ ॥**

**पुरुषः** । अज्ज अह इं ॥ आर्य अथ किम् ।

**राक्षसः** । सावेगमात्मगतम् । चन्दनदासोऽस्य प्रियसुहृदिति तस्य विनाशोऽस्य हुतभुक्प्रवेशहेतुरिति यत्सत्यमाकुलित इवास्मि सुहृत्पक्षपातिना हृदयेन । प्रकाशम् । भद्र तस्यापि तव प्रियसुहृदः सुचरितं विस्तरेण श्रोतुमिच्छामि ।

**पुरुषः** । अदोअवरं ण सक्कुणोमि मन्दभग्गो मरणस्स विग्घमुप्पादेदुं ॥ अतःपरं न शक्नोमि मन्दभाग्यो मरणस्य विघ्नमुत्पादयितुम् ।

**राक्षसः** । भद्र श्रवणीयां कथां कथय ।

**पुरुषः** । का गदी । एसो खु णिवेदेमि । सुणोदु अज्जो ॥ का गतिः एष खलु निवेदयामि । शृणोत्वार्यः ।

१ दिआदिदिण्ण H. २ कथय कि नु नारी° T. किमुत चारुनारी° H. ३ सेट्ठिजणस्स विसेसदो चन्दणदासस्स । H ४ °दासस्य T. ५ °सुहृत् तद्विनाश एवास्य H. ६ चलितमेवास्ते युक्तपक्षपाताद्धृदयम् T. ७ सुहृद्वत्सलतया श्रोतव्यं H. सुहृद्वत्सलतया मर्तव्यं व्यवसितम् T. inserted after this.

**राक्षसः**। भद्र अवहितोऽस्मि ।

**पुरुषः**। अत्थि एत्थ णअरे पुप्फचत्तराणिवासी[1] मणिआरसेट्ठी चन्दणदासो णाम ॥ अस्त्यत्र नगरे पुष्पचत्वरनिवासी मणिकारश्रेष्ठी चन्दनदासो नाम ।

**राक्षसः**। सविषादमात्मगतम् । एतत् तदपावृतमस्मच्छोकद्वारं[2] दैवेन । हृदय स्थिरीभव । किमपि ते कष्टतरमाकर्णनीयमस्ति । प्रकाशम् । भद्र श्रूयते मित्रवत्सलः स साधुः । किं तस्य ।

**पुरुषः**। सो एदस्स जिह्णुदासस्स पिअवअस्सो होदि ॥– स एतस्य जिष्णुदासस्य प्रियसुहृद् भवति ।–

**राक्षसः**। [3]ततस्ततः ।

**पुरुषः**। तदा जिह्णुदासेण वअस्ससिणेहसरिसं अज्ज विण्णविदो चन्दउत्तो –॥ ततो जिष्णुदासेन वयस्यस्नेहसदृशमद्य विज्ञप्तश्चन्द्रगुप्तः ।–

**राक्षसः**। किमिति ।

**पुरुषः**। देव अत्थि मे *कुडुम्बभरणपज्जत्तो अत्थो । तस्स विणिमएण मुञ्चिज्जदु मे पिअवअस्सो चन्दणदासो त्ति ॥ देव अस्ति मे कुटुम्बभरणपर्याप्तोऽर्थः । तस्य विनिमयेन मुच्यतां मे प्रियवयस्यश्चन्दनदास इति ।

**राक्षसः**। स्वगतम् । साधु जिष्णुदास । दर्शितो मित्रस्नेहः ।

पितॄन् पुत्राः पुत्रान् परवदभिहिंसन्ति पितरो
यदर्थे सौहार्दं सुहृदि च विमुञ्चन्ति सुहृदः ।
[4]प्रियं †तं संत्यक्तुं व्यसनिनि वयस्ये व्यवसितः
कृतार्थोऽसावर्थस्तव सति [5]वणिक्त्वे सुवणिजः ॥ १७ ॥

प्रकाशम् । ततस्तथाभिहितेन किं प्रतिपन्नं मौर्येण ।

**पुरुषः**। एव्वं भणिदेण चन्दउत्तेण पडिभणिदो जिह्णुदासो । ण मए अत्थस्स कारणेण चन्दणदासो संजमिदो किंदु पच्छादिदो णेण अमच्च-

1 पुप्फ...णिवासी omitted in all but H (M). २ अस्मच्छोकदीक्षाद्वारं T. मद्विनाशदीक्षाप्रवेशद्वारं M H. ३ स्वगतम् । (सः) अयमभ्यर्णः शोकवज्रपातो हृदयस्य । in place of ततस्ततः in all but H (M). ४ प्रियं सद्यस्त्यक्तु॰ M प्रियं मोक्तुं तदो॰ T, प्रियस्यार्थे योऽसौ व्यसनसहितस्य व्यवासितः H. ५ वणिक्त्वेऽपि वणिजः in all but H (M N).
* Omit कुडुम्बभरण. † Read तमर्थं त्वं त्यक्तुम् ।

रक्खसस्स घरअणो बहुसो वि जाचिदेण वि ण समप्पिदो त्ति[1]। ता जदि तं समप्पेदि तदो अत्थि से मोक्खो। अण्णहा पाणहरो से दण्डो त्ति। एवं भणिअ वज्झट्ठाणं आणत्तो चन्दणदासो। तदो जाव वअस्सचन्दणदासस्स असुणिदव्वं ण सुणामि ताव जलणं पविसामि त्ति जिह्णुदासो णअरादो णिक्कन्तो। *अहं वि जाव पिअवअस्सस्स जिह्णुदासस्स असुणिदव्वं ण सुणामि ताव उब्बन्धिअ अत्ताणं वावादेमि त्ति इदं जिण्णुज्जाणं आअदो॥ एवं भणितेन चन्द्रगुप्तेन प्रतिभणितो जिष्णुदासः। न मयार्थस्य कारणेन चन्दनदासः संयमितः किंतु प्रच्छादितोऽनेनामात्यराक्षसस्य गृहजनो बहुशोऽपि याचितेनापि न समर्पित इति। तद्यदि तं समर्पयति ततोऽस्त्यस्य मोक्षः। अन्यथा प्राणहरोऽस्य दण्ड इति। एव भणित्वा वध्यस्थानमाज्ञप्तश्चन्दनदासः। ततो यावद् वयस्यचन्दनदासस्याश्रोतव्य न शृणोमि तावज्ज्वलनं प्रविशामीति जिष्णुदासो नगरान्निष्क्रान्तः। अहमपि यावत् प्रियवयस्यस्य जिष्णुदासस्याश्रोतव्यं न शृणोमि तावदुद्बध्यात्मानं व्यापादयामीतीद जीर्णोद्यानमागतः।

**राक्षसः**। न खलु व्यापादितश्चन्दनदासः।

**पुरुषः**। णै दाव। वावादीअदि। सो संपदं पुणो पुणो अमच्चरक्खसस्स घरअणं जाचीअदि। ण अ सो मित्तवच्छलदाए समप्पेदे। ता एदिणा कारणेण[3] होदि से मरणस्स कालहरणं॥ न तावद्। व्यापाद्यते। स सांप्रतं पुनः पुनरमात्यराक्षसस्य गृहजन याच्यते। न च स मित्रवत्सलतया समर्पयति। तदेतेन कारणेन भवत्यस्य मरणस्य कालहरणम्।

**राक्षसः**। सहर्षमात्मगतम्। साधु चन्दनदास।

> [4]**शिबिनेव समुद्भूतं शरणागतरक्षणात्।**
> [5]**निचीयते त्वया साधो यशोऽपि [6]सुहृदाविना॥१८॥**

प्रकाशम्। भद्र गच्छेदानीं शीघ्रं जिष्णुदासं ज्वलनप्रवेशान्निवारय। अहं चन्दनदासं मरणान्मोचयामि।

**पुरुषः**। अह केण उवाएण अज्जो चन्दणदासं मोचेदि॥ अथ केनोपायेनार्यश्चन्दनदासं मरणान्मोचयति।

---

१ त्ति omitted M T H. २ अज्ज दाव वावा० T, अज्ज ण दाव वावा० M H.
३ ण करेमि in place of होदि से T ४ शिबेरिव M T H. ५ विचीयते M.
६ सुहृदा विना M T, सुहृदा मया H.
* Omit अहं वि जाव......जिण्णुज्जाणं आअदो।

राक्षसः । खड्गमाकृष्य । नन्वनेन [1]व्यवसायसुहृदा ।

निस्त्रिंशोऽयं [2]विगतजलदव्योमसंकाशमूर्ति-
र्युद्धश्रद्धापुलकित इव प्राप्तसख्यः करेण ।
सत्त्वोत्कर्षात् समरनिकषे दृष्टसारः परैर्मे
[3]मित्रस्नेहाद्विवशमधुना साहसे मां नियुङ्क्ते ॥१९॥

पुरुषः । अज्ज एवं सेट्ठिचन्दणदासजीविदरक्खणेण पिसुणिदा विसमदसाविपाअपडिदा ण सक्कणोमि णिच्छिदपदं भणिदुं किं सुगिहिदणामहेआ अमच्चरक्खसपादा तुम्हे त्ति । ता करेह मे पसादं संदेहणिण्णएण । इति पादयोः पतति ॥ आर्य एव श्रेष्ठिचन्दनदासजीवितरक्षणेन पिशुनिता विषमदशाविपाकपतिता न शक्नोमि निश्चितपद भणितुं किं सुगृहीतनामधेया अमात्यराक्षसपादा यूयमिति । तस्मात् कुरुत मे प्रसादं संदेहनिर्णयेन ।

राक्षसः । भद्र सोऽहमनुभूतभर्तृविनाशः सुहृद्विपत्तिहेतुरनार्यो दुर्गृहीतनामधेयो यथार्थो राक्षसः ।

पुरुषः । सहर्षं पुनः पादयोर्निपत्य । हीमाणहे [4]किदत्थो ह्मि ॥ आश्चर्यम् । कृतार्थोऽस्मि ।

राक्षसः । उत्तिष्ठ । कृतमिदानीं कालहरणेन । निवेद्यतां जिष्णुदासाय यथैष राक्षसश्चन्दनदासं मरणान्मोचयति । इति निस्त्रिंशोऽयमित्यादि पठन्नाकृष्टखड्गं परिक्रमति ।

पुरुषः । पसीदन्दु अमच्चपादा । अत्थि दाव एत्थ पढमं चन्दउत्तहदएण अज्जसअडदासस्स वहो आणत्तो । सो अ वज्झट्ठाणादो केणवि अवहरिअ देसन्तरं अववाहिदो । तदो चन्दउत्तहदएण कीस एसो पमादो किदो त्ति अज्जसअडदासे समुज्जलिदो कोववह्णी घादअजणणिहणेण णिव्वाविदो । तदोपहुदि घादआ जं कंवि गिहिदसत्थं अपुव्वं पुरिसं पिट्ठदो वा अग्गदो वा पेक्खन्ति तदा अत्तणो जीविदं परिरक्खन्ता [5]अप्पमत्ता * वज्झट्ठाणे तुरिदं वज्झं वावादेन्ति । एवं गिहिदसत्थेहिं अमच्चपादेहिं गच्छन्तेहिं सेट्ठिचन्दणदासस्स वहो तुवराइदो भविस्सदि । निष्क्रान्तः ॥ प्रसीदन्त्वमात्यपादाः । अस्ति तावदत्र प्रथमं चन्द्रगुप्तहतकेनार्य-

---

१ व्यवसाय (महा) सुहृदा निस्त्रिंशेन । (ननु) पश्य M T, व्यसनसहायेन निस्त्रिंशेन H. २ सजल T. ३ मित्रस्नेहो विवशमथ वा H. ४ हीमाणहे दिट्ठिआ M T H. ५ अपत्ता ज्जेव वज्झट्ठाणं H. * Omit वज्झट्ठाणे.

शकटदासस्य वध आज्ञप्तः । स च वध्यस्थानात् केनाप्यपहृत्य देशान्तरमपवाहितः । ततश्चन्द्रगुप्तहतकेन कस्मादेष प्रमादः कृत इत्यार्यशकटदासे समुज्ज्वलितः कोपवह्निर्घातकजननिधनेन निर्वापितः । ततःप्रभृति घातका य कमपि गृहीतशस्त्रमपूर्वं पुरुषं पृष्ठतो वाग्रतो वा प्रेक्षन्ते तदात्मनो जीवितं परिरक्षन्तोऽप्रमत्ता वध्यस्थाने त्वरितं वध्यं व्यापादयन्ति । एवं गृहीतशस्त्रैरमात्यपादैर्गच्छद्भिः श्रेष्ठिचन्दनदासस्य वधस्त्वरायितो भविष्यति ।

**राक्षसः** । अहो दुर्बोधश्चाणक्यबटोर्नीतिमार्गः ।

यदि हि शकटो नीतः शत्रोर्मतेन ममान्तिकं
किमिति निहतस्तेन क्रोधाद्वधाधिकृतो जनः ।
अथ [1]न कृतकं [2]तादृग्लेख्यं कथं नु विभावये-
दिति मम मतिस्तर्कारूढा न पश्यति निश्चयम् ॥२०॥

विचिन्त्य

नायं निस्त्रिंशकालः प्रथममिह कृते घातकानां विघाते
नीतिः कालान्तरेण प्रकटयति फलं किं तया कार्यमत्र ।
औदासीन्यं न युक्तं प्रियसुहृदि गते [3]मत्कृते चातिघोरां
व्यापत्तिं ज्ञातमस्य स्वतनुमहमिमां निष्क्रयं कल्पयामि ॥२१॥

खड्गमुत्सृज्य निष्क्रान्तः ।

इति कपटपाशो नाम षष्ठोऽङ्कः ।

---

१ स M. २ तादृक् कष्टं T, तादृग्लेखं M H. ३ मत्कृतामेव घोरां T H.

## निर्वहणं नाम
## सप्तमोऽङ्कः ।

ततः प्रविशति चण्डालो वज्रलोमा ।

**वज्रलोमा** । ओशलध अय्या ओशलध । अवेध । हीमाणह[1] ।

**यदि महह लक्खिदुं शे प्पाणे विहवे कुलं कलत्तं अ ।**
**ता [2]पलिहलध विशं विअ लायापश्त्थं शुदूलेण ॥ १ ॥**

आवि अ

**होदि पुलिशश्श वाधी मलणं वा शेविदे अपश्छम्मि ।**
**लायापश्छे उण शेविदम्मि शअलं कुलं मलदि ॥२॥**

तं यदि ण पदिज्जध ता पेस्कध एदं लायापश्छकालिणं शेस्टिचन्दणदाशं [3]वज्झस्ताणं णीयमाणं । आकाशे । अय्या किं भणध । अस्ति शे के वि मोक्खोवाए त्ति । [4]अस्ति अमच्चलक्खशश्श घलयणं यदि शमप्पेदि । पुनराकाशे । किं भणध । एशे शलणागदवश्छले अत्तणो यीविदमेत्तश्श कालणादो ईदिशं अकय्यं ण कलिश्शदि त्ति । अय्या तेण हि अवधालेध शे अशुहं गदिं[5] । किं दाणिं तुह्माणं एत्थ पदीआलविआलेण ॥ अपसरत आर्या अपसरत । अपेत रे ।

यदीच्छथ राक्षितु स्वान् प्राणान् विभवान् कुल कलत्र च ।
तत् परिहरत विषामिव राजापथ्यं सुदूरेण ॥

अपि च

भवति पुरुषस्य व्याधिर्मरण वा सेवितेऽपथ्ये ।
राजापथ्ये पुनः सेविते सकलं कुलं म्रियते ॥

तं यदि न प्रतीथ तत् प्रेक्षध्वमेतं राजापथ्यकारिणं श्रेष्ठिचन्दनदासं वध्यस्थानं नीयमानम् । आर्याः किं भणथ । अस्त्यस्य कोऽपि मोक्षोपाय इति । आर्याः अस्त्यमात्यराक्षसस्य गृहजनं यदि समर्पयति । कि भणथ । एष शरणागतवत्सल आत्मनो जीवितमात्रस्य कारणेनेदृशमकार्यं न करिष्यतीति । आर्याः तेन ह्यवधारयतास्याशुभां गतिम् । किमिदानीं युष्माकमत्र प्रतीकारविचारेण ।

---

१ After this T ( A P ) and H ( M L ) insert the verse
वय्येह लाअवश्छं ( vl. लाअदव्वं ) विशं व पलिहलध शव्ववशणाइं ।
एदेशु वट्टमाणे होदि जणे शुलहाविणिवादे ॥
२ पलिहलेह विशं T. ३ शउत्तकलत्तं added here in all but ( MKH ).
४ कुदो शे अधव्अश्श मोक्खे । एवं उण added here H. ५ शुहगदिं । एत्तिके दाणिं......पदीआलविहवे T H.

ततः प्रविशति चण्डालेन बिल्ववक्त्रेणानुगतो वध्यवेशधारी शूलं स्कन्धेन वहन् कुटुम्बिन्या पुत्रेण चानुगम्यमानश्चन्दनदासः ।

[1]**कुटुम्बिनी** । सबाष्पम् । हद्धी हद्धी ।

[2]**अह्मारिसाण [3]वि कुले णिच्चं चारित्तभङ्गभीरूणं ।**
**चोर[4]जणोच्चिदमरणं [5]होइ त्ति [6]णमो किदन्तस्स ॥३॥**

अह वा ण णिसंसाणं उदासीणेसु इदरेसु वा विसेसो अत्थि । तह हि-

**मोत्तूण आमिसाइं मरणभएणं तिणेहिं जीअन्तं[7] ।**
**वाहाण [8]मुद्धहरिणं हन्तुं को णाम णिब्बन्धो ॥४॥**

समन्तादवलोक्य । भो *पिअवअस्स जिह्णुदास कहं पडिवअणं वि ण मे पडिवज्जसि । अह वा दुल्लहा ते खु माणुसा जे एदस्सिं काले दिट्ठिवहे चिट्ठन्ति ॥ हा धिक् हा धिक्

अस्मादृशानामपि कुले नित्यं चारित्रभङ्गभीरूणां ।
चोरजनोचित मरणं भवतीति नमः कृतान्ताय ॥

अथ वा न नृशंसानामुदासीनेष्वितरेषु वा विशेषोऽस्ति । तथा हि

मुक्त्वामिषाणि मरणभयेन तृणैर्जीवन्तम् ।
व्याधानां मुग्धहरिणं हन्तुं को नाम निर्बन्धः ॥

भो जिष्णुदास प्रियवयस्य कथं प्रतिवचनमपि न प्रतिपद्यसे । अथ वा दुर्लभास्ते खलु मानुषा य एतस्मिन् काले दृष्टिपथे तिष्ठन्ति ।

[9]**चन्दनन्दासः** । सबाष्पम् । एदे अह्म पिअवअस्सा ¶अंसुपादमेत्तकेण किदपदीआरा सरीरेहिं णिवट्टमाणा परिवत्तिदसोअदीणवअणा वाहगरुआए दिट्ठीए मं अणुगच्छन्ति ॥ एतेऽस्माकं प्रियवयस्या अश्रुपात मात्रेण कृतप्रतीकाराः शरीरैर्निवर्तमानाः परिवर्तितशोकदीनवदना बाष्पगुरुकया दृष्ट्या मामनुगच्छन्ति ।

**बिल्ववक्त्रः** । अय्या चन्दणदाशा आअदे शि वज्झस्ताणं । ता विशय्येहि घलयणं ॥ आर्य चन्दनदास आगतोऽसि वध्यस्थानम् । तस्माद्विसर्जय गृहजनम् ।

---

१ चन्द० T H. २ M T read the verse as prose ३ वि कधं चारित्त० M, वि णिच्चं चारित्त० T, वि जदो णिच्चं चारित्त० H. ४ जणाणं विअ M. जणोचिदं T. ५ पत्तं M H. ६ णमो णमो M. ७ जीवन्ते H. ८ हरिणे H. ९ चन्द० omitted M H

* Omit पिअवअस्स. ¶Omit अंसुपादमेत्तकेण किदपदीआरा.

**चन्दनदासः ।** अज्जे णिवत्तेहि संपदं सपुत्ता । ण जुत्तं खु अदोवरं अणुगच्छिदुं ।। आर्ये निवर्तस्व सांप्रतं सपुत्रा । न युक्तमतःपरमनुगन्तुम् ।

**कुटुम्बिनी ।** सबाष्पम् । परलोअं पत्थिदो अज्जो ण देसन्तरं ।।[1] ता अकालो दाणिं एसो कुलवहूजणस्स णिवत्तिदुं ।। परलोक प्रस्थित आर्यो न देशान्तरम् । तस्मादाकल इदानीमेष कुलवधूजनस्य निवर्तितुम् ।

**चन्दनदासः ।** अह किं ववसिदं अज्जाए ।। अथ किं व्यवसितमार्यया ।

**कुटुम्बिनी ।** भत्तुणो चलणे अणुगच्छन्तीए अप्पाणुग्गहो [3]होदु त्ति ।। भर्तुश्चरणावनुगच्छन्त्या आत्मानुग्रहो भवत्विति ।

**चन्दनदासः ।** अज्जे दुव्ववसिदं एदं । तुए अअं कुमारो असुणिदलोअसंववहारो अणुगिह्णिदव्वो ।। आर्ये दुर्व्यवसितमेतत् । त्वयाय कुमारोऽश्रुतलोकसंव्यवहारो बालोऽनुगृहीतव्यः ।

**कुटुम्बिनी ।** अणुगिह्णन्दु णं पसण्णाओ कुलदेवदाओ । जाद पडसु अपच्छिमं पिदुणो पादेसु ।। अनुगृह्णन्त्वेन प्रसन्नाः कुलदेवताः । जात पतापश्चिमं पितुः पादयोः ।

**पुत्रः ।** पादयोर्निपत्य । ताद किं दाणिं मए तादविरहिदेण अणुचिट्ठिदव्वं ।। तात किमिदानीं मया तातविरहितेनानुष्ठातव्यम् ।

**चन्दनदासः ।** पुत्त चाणक्कविरहिदे देसे वसिदव्वं ।। पुत्र चाणक्यविरहिते देशे वस्तव्यम् ।

**बिल्ववक्त्रः ।** अय्या चन्दणदाशा णिखादे शूले । ता शय्ये होहि ।। आर्य चन्दनदास निखातः शूलः । तस्मात् सज्जो भव ।

**कुटुम्बिनी ।** अज्जा परित्ताअध परित्ताअध ।। आर्याः परित्रायध्वं परित्रायध्वम् ।

**चन्दनदासः ।** अज्जे अह किं एत्थ आक्कन्दसि । सग्गं गदा खु ते देवा णन्दा जे दुक्खिदं जणं अणुकम्पन्ति ।। आर्ये अथ किमत्राक्रन्दसि । स्वर्गं गताः खलु ते देवा नन्दा ये दुःखितं जनमनुकम्पन्ते ।

१ चन्द० । अज्जे अअं मित्तकज्जेण मे विणासो ण उण पुरिसदोसेण । ता अल विसादेण ।। कुटु० । अज्ज जइ एव्वं inserted here T. २ कुलजणस्स T. ३ होदु त्ति omitted H. ४ देवदाओ T ५ अपच्छिमस्स M. पच्छिमेसु T ६ गदाणं दाव देवा दुक्खिदं T ७ इत्थीजणं पहृदिणं M, परिअणं T

**वज्रलोमा** । अले बिल्लवत्ता गेह्ण चन्दणदाशं । शयं य्येव घलअणे गमिस्सदि ॥ अरे बिल्ववक्त्र गृहाण चन्दनदासं । स्वयमेव गृहजनो गमिष्यति ।

**बिल्ववक्त्रः** । अले वज्जलोमा एशे गेह्णामि ॥ अरे वज्रलोमन् एष गृह्णामि ।

**चन्दनदासः** । भद्द मुहुत्तं चिट्ठ जाव पुत्तअं परिस्सआमि । पुत्र परिष्वज्य मूर्ध्न्याघ्राय । जाद अव्वस्सं भविदव्वे विणासे मित्तकज्जं समुव्वहमाणो विणासं अणुभवेहि ॥ भद्र मुहूर्तं तिष्ठ यावत् पुत्रक परिष्वजे । ...जात अवश्य भवितव्ये विनाशे मित्रकार्यं समुद्वहन् विनाशमनुभव ।

**पुत्रः** । ताद किं एदं वि भणिदव्वं । [1]कुलधम्मो खु एसो अह्माणं ॥ तात किमेतदपि भणितव्यम् । कुलधर्मः खल्वेषोऽस्माकम् ।

**वज्रलोमा** । अले गेह्ण एदं ॥ अरे गृहाणैनम् ।

चण्डालौ गृहीतश्चन्दनदासम् ।

**कुटुम्बिनी** । सोरस्ताडम् । अज्जा परित्ताअध परित्ताअध ॥ आर्याः परित्रायध्व परित्रायध्वम् ।

प्रविश्यापटीक्षेपेण **राक्षसः** । भवति न भेतव्यं न भेतव्यम् । भो भोः [2]शूलायतनाः न खलु व्यापादयितव्यश्चन्दनदासः ।

> **येन स्वामिकुलं रिपोरिव कुलं दृष्टं विनश्यत् पुरा**
> **मित्राणां व्यसने महोत्सव इव स्वस्थेन येन स्थितम् ।**
> **आत्मा यस्य [3]च वञ्चनापरिभवक्षेत्रीकृतोऽपि प्रिय—**
> **स्तस्येयं मम मृत्युलोकपदवी वध्यस्रगाबध्यताम् ॥५॥**

**चदनदासः** । विलोक्य सबाष्पम् । अमच्च किं एदं ॥ अमात्य किमेतत् ।

**राक्षसः** । त्वदीयसुचरितैकदेशस्यानुकरणम् ।

**चन्दनदासः** । सव्वं वि एदं पआसं णिप्फलं करन्तेण [4]तुंए किं अणुचिट्ठिदं ॥ सर्वमप्येतं प्रयासं निष्फल कुर्वता त्वया किमनुष्ठितम् ।

**राक्षसः** । सखे स्वार्थ [5]ऐवानुष्ठितः । कृतमुपालम्भेन । भद्र निवेद्यतां दुरात्मने चाणक्याय—

१ कुलक्कमो M. H २ सेनापते M H. ३ वधाय वः परि० M T. ४ ण मे पिअं अणुचिट्ठिदं अमच्चेण । M H. ५ एष हि जीवलोकः । M H.

**वज्रलोमा** । किं त्ति ।। किमिति ।

**राक्षसः** ।

> **दुष्कालेऽपि कलावसज्जनरुचौ प्राणैः परं रक्षता**
> **नीतं येन यशस्विनातिलघुतामौशीनरीयं यशः ।**
> **बुद्धानामपि चेष्टितं सुचरितैः क्लिष्टं विशुद्धात्मना**
> **पूजार्होऽपि स यत्कृते तव गतो वध्यत्वमेषोऽस्मि सः ॥६॥**

**वज्रलोमा** । अले बिल्लवत्ता तुमं दाव शेस्टिचन्दणदाशं गेह्णिअ एदश्श मशाणपादपश्श छायाए मुहुत्तं दाव चिष्ट याव हगे अय्यचाणक्कश्श णिवेदेमि गिहिदे अमच्चल१कशे त्ति ।। अरे बिल्ववक्त्र त्वं तावच्छ्रेष्ठिचन्दनदासं गृहीत्वैतस्य श्मशानपादपस्य छायाया मुहूर्तं तिष्ठ यावदहमार्यचाणक्याय निवेदयामि गृहीतोऽमात्यराक्षस इति ।

**बिल्ववक्त्रः** । अले वय्यलोमा एवं भोदु । इति सपुत्रदारेण चन्दनदासेन सह निष्क्रान्तः ।। अरे वज्रलोमन् एवं भवतु ।

**वज्रलोमा** । एदु अमच्चे । राक्षसेन सह परिक्रम्य । के एत्थ दुवालिआणं । णिवेदेध दाव णन्दकुलशाचुण्णकुलिशश्श* मोलिअकुलपडिस्टावअस्स अय्य चाणक्कश्श ।। एत्वमात्यः ।। कोऽत्र दौवारिकाणाम् । निवेदयत तावन्नन्दकुलनगकुलिशाय मौर्यकुलप्रतिष्ठापकायार्यचाणक्याय ।

**राक्षसः** । स्वगतम् । एतदपि नाम श्रोतव्यम् ।

**वज्रलोमा** । एशे अय्यणीदिणिअलिद†बुद्धिविहवे गिहिदे अमच्चल२कशे त्ति ।। एष आर्यनीतिनिगलितबुद्धिविभवो गृहीतोऽमात्यराक्षस इति ।

ततः प्रविशति जयनिकावृतशरीरो मुखमात्रदृश्यश्चाणक्यः ।

**चाणक्यः** । भद्र

> **केनोत्तुङ्गशिखाकलापकपिलो बद्धः पटान्तेऽनलः**
> **पाशैः केन सदागतेरगतिता सद्यः समापादिता ।**
> **केनानेकपदानवासितसटः सिंहोऽर्पितः पञ्जरे**
> **भीष्मः केन च नैकनक्रमकरो दोर्भ्यां प्रतीर्णोऽर्णवः ॥७॥**

---

१ (णिअम) शंयमिद M T, णिअलशंयमिद M २ पुलिशआले M K, पलिंसले T
* Omit कुलिश. † Read णिग्गलिद.

